# DRAVYA GOOṆA SANGRAHA.

(A Sanskrit System of Materia Medica)

BY

CHAKRAPÂNI DATTA



WITH

The Commentary

OF

## DRAVYA GOOṆA SANGRAHA ṬÎKÂ

BY

SHIVADÂS SEN.



EDITED BY

VAIDYA JÂDAVJÎ TRICUMJÎ ÂCHÂRYA.

*( Editor of the Mâdhavnidân with the commentary of the Madhukosha. )*



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRṆAYA-SÂGAR" PRESS,

Bombay.

1905.

*Price 8 Annas.*

श्रीः ।

वैद्यमहामहोपाध्यायश्रीचक्रपाणिदत्तविरचितो

# द्रव्यगुणसंग्रहः ।

श्रीशिवदासेनविरचितया

द्रव्यगुणसंग्रहटीकाख्यव्याख्यया

समुल्लसितः

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः



स च

मुम्बय्यां

'जावजी दादाजी' इत्येषां निर्णयसागरयन्त्रालयाधिपतिना

'तुकाराम जावजी' इत्यनेन स्वकीये मुद्रणालये

मुद्रयित्वा प्रकाशितः ।

शके १८२६, सन १९०५.

मूल्यं ८ आणकाः.

# भूमिका ।

वैद्यस्य रोगापनयने स्वास्थ्यरक्षणे च द्रव्यगुणज्ञानमावश्यकम् । तत्र द्रव्यं द्विविधं आहारौषधभेदेन । तत्रापि आहारद्रव्याणां औषधद्रव्यापेक्षया बहुतरोपयोगात् स्वस्थातुरोभयसाधारण्याच्च आहारद्रव्यगुणानेव, मन्दमतीनां व्यवहारार्थं बुद्धिमतां च अनुक्तज्ञानार्थं स्वल्पेन ग्रन्थेन व्याचिख्यासुः चरकसुश्रुताद्यनेकायुर्वेदतन्त्रावबोधविशुद्धबुद्धिः श्रीचक्रपाणिदत्तः क्वचिच्चरकसुश्रुतादिवचनैः क्वचिच्च स्वविरचितपद्यैः **द्रव्यगुणसंग्रहा**ख्यमिमं ग्रन्थं व्यधत्त । अस्मिंश्च पूर्वं द्रव्यगुणज्ञानोपायान् रसवीर्यविपाकान् निरूप्य धान्यमांसशाकलवणफलपानीयक्षीरतैलेक्षुविकृतिमद्यकृतान्नभक्ष्याहारविध्यनुपानमिश्रकाख्यैः पञ्चदशवर्गैः नित्यमाहारेपूपयुज्यमानानां द्रव्याणां गुणकर्माणि निर्दिष्टवान् । अयं च ग्रन्थः चरकसुश्रुतादितन्त्रेष्वकृतपरिश्रमाणां भिषजां छात्राणां च स्वल्पेनायासेनाहारद्रव्यगुणज्ञानेऽद्वितीयो वरीवर्ति । एवं ग्रन्थस्यास्योपादेयतां विज्ञाय श्रीशिवदाससेनेनास्योपरि **द्रव्यगुणसंग्रहटीका**ख्या व्याख्या व्यरचि । अस्यां च व्याख्यायां श्रीशिवदाससेनेन रसवीर्यविपाकादिविषये धातुपोषणक्रमादिविषये च बहूनां तन्त्रकर्तॄणां व्याख्याकर्तॄणां च मतान्युपन्यस्य सम्यङ्निश्चयो व्यधायि । श्रीचक्रपाणिदत्तः श्रीशिवदाससेनश्च कस्मिन्समये कतमं जनपदं जन्मनाऽलञ्चकार एतद्विषये तद्विरचितग्रन्थेभ्यो यत्किञ्चिदितिवृत्तमस्माभिरुपलब्धं तत्साहाय्येन किंचिल्लिख्यते । श्रीचक्रपाणिः संप्रति 'वीरभूम' इति प्रसिद्धे गौडदेशान्तर्गते 'वरेन्द्रभूमिः' इत्याख्ये 'वीरेन्द्रभूमिः' इत्याख्ये वा देशे समजनि । स च वैद्यजातीयः ( अम्बष्ठजातीयः ), 'लोधबली' संज्ञकदत्तकुलोत्पन्नः, गौडाधिपतेः श्रीनयपालदेवस्य महानसाधिकारिणो मन्त्रिणश्च श्रीनारायणस्य तनयः, गौडाधिपतितो लब्धान्तरङ्गपदवीकस्य श्रीभानुदत्तस्य कनिष्ठो[1] बन्धुः, श्रीनर-

१. एतच्च चक्रपाणिना स्वेनैवोक्तं चिकित्सासंग्रहस्यान्ते, यथा,—"गौडाधिनाथरसवत्यधिकारिपात्रनारायणस्य तनयः सुनयोऽन्तरङ्गात् ॥ भानोरनुप्रथितलोध्रबलीकुलीनः श्रीचक्रपाणिरिहकर्तृपदाधिकारी"॥ "इदानीं ग्रन्थपरिसमाप्तौ पित्रादीनामुत्कीर्तनपूर्वकं स्वनाम निवेशयन्नाह—गौडाधिनाथेत्यादि । गौडाधिनाथो नयपालदेवः, तस्य रसवती महानसं, तस्य अधिकारी; तथा पात्रमिति मन्त्री; ईदृशो यो नारायणस्तस्य तनयः । सुनयो नीतिमान् । अन्तरङ्गादिति लब्धान्तरङ्गपदवीकात् भानोरनु नारायणस्य तनय इति योज्यं, तेन भानोरनुज इत्यर्थः । विद्याकुलसंपन्नो हि भिषगन्तरङ्ग इत्युच्यते । लोध्रबलीकुलीन इति लोध्रबलींसंज्ञकदत्तकुलोत्पन्नः" इति च तत् श्लोकस्य शिवदासकृतं व्याख्यानम् ॥

दत्तस्य[1] च शिष्य आसीत्। गौडदेशे पष्ठ्यधिकसहस्रतमे खिष्टाब्दे श्रीविजयसेनेन राज्यं स्थापितम्। यद्वंशीयाः 'सेन' इत्युपपदधारिणो राजानः यवनाक्रान्तिपर्यन्तं गौडदेशमन्वशिषन्। तत्पूर्वं च गौडदेशे 'पाल' इत्युपपदधारिणां राज्ञां राज्यमासीत्। श्रीनयपालदेवश्च तेषामन्यतमः। अतः श्रीचक्रपाणिः सार्धाष्टाशतवर्षतः प्राचीन इत्यनुमीयते। श्रीचक्रपाणिना चरकस्योपरि आयुर्वेददीपिकाख्या व्याख्या, सुश्रुतस्योपरि भानुमत्याख्या व्याख्या, चिकित्सासंग्रहः, द्रव्यगुणसंग्रहश्च एते ग्रन्था विरचिताः। श्रीशिवदाससेनः गौडदेशान्तर्गतमालञ्चिकाख्यग्रामनिवासी[2] गौडाधिपतेः लब्धान्तरङ्गपदवीकस्य श्रीअन्तसेनस्य तनय आसीत्। श्रीशिवदाससेनेन चरकस्योपरि चरकतत्त्वदीपिकाख्या व्याख्या, चक्रपाणिदत्तविरचितचिकित्सासंग्रहस्योपरि तत्त्वचन्द्रिकाख्या व्याख्या, तद्विरचितद्रव्यगुणसंग्रहस्योपरि च द्रव्यगुणसंग्रहटीकाख्या व्याख्या एते ग्रन्था विरचिताः।

ग्रन्थस्यास्य सटीकस्यैकमादर्शपुस्तकमुपलभ्य तत्साहाय्येन संदेहस्थले चरकसुश्रुतादिग्रन्थान्तरपर्यालोचनेन च यथामति संशोधनं कृतम्। यदि क्वापि किंचित्स्खलनमुपलभ्येत चेत् गुणैकपक्षपातिभिर्बुधैः क्षन्तव्योऽहं निवेदयितव्यश्च; सफलीकर्तव्यश्च ममायं प्रयासः ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेति शम्।

**यादवशर्मा**

---

१. एतच्च स्पष्टमेवोक्तं चक्रेण चरकटीकायां, यथा,—"नरदत्तगुरुदिष्टचरकार्थानुगामिनी ॥ क्रियते चक्रदत्तेन टीकायुर्वेददीपिका" ॥ २. एतच्च शिवदासेन तत्त्वचन्द्रिकायां व्यक्तमेवोक्तम्; "मालञ्चिकाग्रामनिवासभूमेर्गौडावनीपाल भिषग्वरस्य । अनन्तसेनस्य सुतो विवधत्ते टीकामिमां श्रीशिवदाससेनः"—इति ॥

# द्रव्यगुणसंग्रहान्तर्गतविषयाणामनुक्रमणिका ।

## शाकवर्गः

# द्रव्यगुणसंग्रहः ।

# द्रव्यगुणसंग्रहटीकायां प्रमाणत्वेन समुपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च तत्तत्स्थानोल्लेखपूर्वकं नामानि ॥

सुश्रुतः २—५, इत्यादि ॥
चरकः २—७, इत्यादि ।
न्यायदर्शनं २—१८ इति ।
वाग्भटः ७—१ इत्यादि ।
जतुकर्णः ११—३० इत्यादि ।
माधवः १२—११ इत्यादि ।
विश्वामित्रः १३—२१ इत्यादि ।
गयदासः १९—६ इति ।
हारीतः २३—१५ इत्यादि ।
डल्हणः २५—१५ इत्यादि ।
त्रिविक्रमः २५—१६ इत्यादि ।
पराशरः ३१—२ इति ।
ब्रह्मदेवः ३२—९ इत्यादि ।
वृद्धवाग्भटः ३२—२४ इति ।
अरुणः ३९—५ इति ।
चक्रः ४०—१८ इत्यादि ।
भट्टारहरिचन्द्रः ४५—५ इत्यादि ।
चन्द्रिकाकारः ४५—२४ इत्यादि ।
पुरुषोत्तमः ४६—२६ इति ।
भोजः ४८—२१ इत्यादि ।
जेज्जडः ५६—२० इति ।
अग्निवेशतन्त्रम् ५७—१५ इति ।
नलः ८६—१६ इति ।

---

श्रीः ।

# द्रव्यगुणसंग्रहः ।

## शिवदासकृतव्याख्यासहितः ।

**प्रायः पृच्छन्ति यत्रेशास्तद्द्रव्यगुणसंग्रहः ॥**
**धारणस्मरणोन्मुखो यथा स्याल्लिख्यते तथा ॥ १ ॥**

दशाननादितिमिरपरिभूतमिदं जगत् ॥
प्रससाद यतस्तस्मै कस्मैचिन्महसे नमः ॥ १ ॥
काणादसांख्यायुर्वेदतन्त्राणां पारदृश्वनः ॥
तातस्यानन्तसेनस्य वन्दे चरणपङ्कजम् ॥ २ ॥
महदादिनिकायोऽयं यस्याः प्रादुरभूत् किल ॥
सतीं गुणमयीं भक्त्या भैरवीं जननीं भजे ॥ ३ ॥
रचितश्चक्रदत्तेन यो द्रव्यगुणसंग्रहः ॥
श्रीमता शिवदासेन तस्य व्याख्याऽभिधीयते ॥ ४ ॥
नोक्ताश्चक्रेण ये द्रव्यगुणा विस्तरभीरुणा ॥
तेऽपि प्रसङ्गतो लेख्याः शिष्यव्युत्पत्तये मया ॥ ५ ॥

अनिबद्धस्यापि इष्टदेवतानमस्कारस्य विघ्नवारणसमर्थत्वात् तन्निबन्धनं ग्रन्थगौरव-मात्रमावहतीति कृतमपि नमस्कारं ग्रन्थादौ अनिबध्य शिष्यप्रवृत्त्यङ्गतया अभिधेयसंब-न्धप्रयोजनान्येव तावदाह–प्राय इत्यादि । द्रव्यगुणसंग्रह इति यद्यपि मधुरादिरसानां तथा छायातमसोश्च अद्रव्यभूतयोरपि गुणा अत्र वाच्यास्तथापि द्रव्यपदं 'छत्रिणो गच्छ-न्ति' इति न्यायेन समर्थनीयम्; किंवा द्रव्याणि गुणाश्च द्रव्यगुणाः, तेषां संग्रहः संक्षेपेण तद्धर्मप्रतिपादकं वचनम् । अस्मिन् पक्षेऽपि छायातमसोर्द्रव्यत्वं मीमांसकमतमाश्रित्य सम-र्थनीयं, सर्वपारिषदत्वात् वैद्यकशास्त्रस्य । यदुक्तं,–"तमस्तमालमालाभं चलतीति प्रती-यते । रूपवत्त्वात् क्रियावत्त्वात् द्रव्यं तु दशमं च तत्"–इति । अन्ये तु अद्रव्यभूतानां रसादीनां ये गुणा वाच्यास्तेषामौपचारिकत्वेन अप्रधानत्वात् अत्रानुपग्रह इत्याहुः । इह च द्रव्यगुणा अभिधेयाः, तैः समं ग्रन्थस्याभिधानाभिधेयलक्षणः संबन्धः, प्रयो-जनं च द्रव्यगुणज्ञानं, मुख्यप्रयोजनं च चिकित्सितमिति । धारणमिति शब्दतः,

स्मरणमित्यर्थतः। इह यद्यपि आश्रयत्वेन द्रव्यमेव प्रधानं, तथाऽपि द्रव्यस्य स्वकार्यजनकत्वं प्रायो रसादिद्वारकमेवेति रसवीर्यविपाकगुणा एव प्रथमतो वाच्याः; तत्रापि रसाधीनत्वात् वीर्यस्य, वीर्याधीनत्वाच्च विपाकस्य, वीर्यात् पूर्वं रसः, विपाकात् पूर्वं च वीर्यं निरूपणीयम्। उक्तं च,—"पाको नास्ति विना वीर्याद्, वीर्यं नास्ति विना रसात्" —इति (सु. सू. स्थान. अ. ४०)। तत्र यावद्रसस्वरूपं न ज्ञायते तावत् तद्विशेषधर्माः कथं ज्ञेया इति लक्षणतः कारणतः संख्यातश्च रसोऽभिनिरूप्यते। तत्र रससामान्यलक्षणं, यदाह चरकः,—"रसनार्थो रसः" इति (च. सू. स्था. अ. १)। रसनेन्द्रियग्राह्यो योऽर्थः स रस इति लक्षणार्थः। "एतच्च षण्णामपि रसानामनुगतं रूपादिषु च व्यावृत्तत्वात् साधु लक्षणम्"—इति चक्रः। अस्मत्पितृचरणास्तु "यथाश्रुतमेतल्लक्षणं रसत्वे रसाभावे चातिव्यापकं, तयोरपि रसनेन्द्रियग्राह्यत्वात्; तथा अतीन्द्रियरसे च अव्यापकम्, तस्मात् 'रसनेन्द्रियग्राह्यवृत्तिगुणत्वावान्तरजातिमत्त्वं रसत्वम्' इति लक्षणं बोध्यम्"—इत्याहुः। ननु, "आप्यो रसः"—इति (सु. सू. स्था. अ. ४२) सुश्रुतेनोक्ते तत्र विप्रतिपद्यामहे—यद्याप्यो रसस्तर्हि कथं पार्थिवद्रव्येषु रसोपलम्भ इति प्रथमा विप्रतिपत्तिः, द्वितीया तु यदि आप्य एव रसस्तर्हि अपामव्यक्तरसत्वेन मधुरादिविशेषोत्पादो नोपपद्यत इति; अथ 'पाञ्चभौतिकत्वमेव रसस्य' इति मन्यसे तदपि नोपपद्यते, तेजोवाय्वाकाशानां नीरसत्वात् रसं प्रति कारणत्वानुपपत्तेः। अत्राहुः—यद्यप्याप्य एव रसस्तथाऽपि उत्तरोत्तरभूतेषु पूर्वपूर्वभूतगुणानुप्रवेशात् रसवत्त्वं पृथिव्यामप्युपपद्यते। अत एवोक्तम्,—"विष्टं ह्यपरं परेण"—इति (न्या. द. अ. ३, आ. १, सू. ६६)। अस्यार्थः—अपरं पूर्वं भूतं परेण भूतेनानुप्रविष्टम्। तेन शब्दगुणस्याकाशस्य वायौ अनुप्रवेशात् वायोरपि शब्दवत्त्वम्, स्पर्शगुणत्वं च स्वत एव; एवं वायोस्तेजसि अनुप्रवेशात् तेजः शब्दस्पर्शरूपगुणम्; तेजसोऽपि जलेऽनुप्रवेशात् जलं शब्दस्पर्शरूपरसगुणम्; एवं जलस्य च पृथिव्यामनुप्रवेशात् पृथिवी च शब्दस्पर्शरूपरसगन्धगुणा इति ज्ञेयम्। कतिधापुरुषीयेऽप्युक्तम्,—"महाभूतानि खं वायुरग्निरापः क्षितिस्तथा। शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः॥ तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे। पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृतः"—इति (च. शा. स्था. अ. १)। अस्यार्थः—तेषां खादीनां मध्ये पूर्वः खरूप एकगुणः शब्दैकगुण इत्यर्थः, परे परे उत्तरोत्तरं गुणवृद्धिरित्यर्थः; यथा—खमेकगुणं, वायुर्द्विगुणः, अग्निस्त्रिगुण इत्यादि। ननु, गुणवृद्धिमात्रमित्युक्तं, एतावता एकगुणत्वद्विगुणत्वादिनियमो न ज्ञायते को वा गुणः कुत्र भूते इत्यत आह—पूर्व इत्यादि।—खादिषु गुणिषु क्रमशो यथासंख्यं पूर्वो गुणः शब्दादिर्वर्तते, यथा—खे शब्दः, वायौ स्पर्श इत्यादि। गन्धस्तु यद्यप्युत्तरः गुणान्तराभावात् पूर्वो न भवति तथापि 'छत्रिणो गच्छन्ति' इति न्यायेन अपूर्वस्यापि पूर्वत्वं समर्थनीयम्। न केवलं पूर्वो गुणो वर्तते किंतु पूर्वगुणश्च पूर्वस्य भूतस्यापि यो गुणः सोऽप्युत्तरभूते वर्तत इत्याह—पूर्वगुणश्चेति। तेन वायौ स्पर्शो नैसर्गिकः, पूर्वस्य आकाशस्य यो गुणः शब्दः सोऽपि

वायौ इति द्विगुणत्वं; एवमग्नौ रूपं नैसर्गिकं, शब्दस्पर्शौ च पूर्वभूतगुणौ इति त्रिगुणत्वं; एवमन्यत्रापि । नचैवं सर्व एव गुणाः सर्वेषामेव प्रसज्येरन् तत्कथमाप्यो रस इति वाच्यम्, तेषु तेषु भूतेषु तत्तद्गुणानुप्रवेशेऽप्युत्कर्षाभिप्रायेणाप्यत्वादिव्यपदेशात् । यत आकाशाधिके द्रव्ये शब्दोऽधिकः, तथा वाताधिके द्रव्ये स्पर्शोऽधिकः, तथा तेजोऽधिके रूपमधिकं, जलाधिके च रसोऽधिकः, पृथिव्यधिके च गन्धोऽधिक इति शब्दादीनामाकाशीयत्वादिव्यपदेश इत्यर्थः । तथा अपामव्यक्तरसत्वेऽपि भूतान्तरसंबन्धात् मधुरत्वादिवैजात्यमुपपद्यते । उक्तं च सुश्रुते,—"स खल्वाप्यो रसः शेषभूतसंसर्गाद्विदग्धः षड्विधो भवति"–इति ( सु. सू. स्था. अ. ४२ )। अस्यार्थः–स आप्यो रसो जलादन्यानि भूतानि शेषभूतानि तेषां संसर्गात् विदग्धः परिणतः कालसहायभूमिवियदनिलानलसंसर्गेण परिणामान्तरं गतः षट्प्रकारो भवतीति । तत्र पृथिव्यम्बुगुणबाहुल्यात्[१] मधुरः[२], तोयाग्निगुणबाहुल्यात् अम्लः, पृथिव्यग्निगुणबाहुल्यात् लवणः[३], वाय्वग्निगुणबाहुल्यात् कटुकः, वाय्वाकाशगुणबाहुल्यात् तिक्तः, पृथिव्यनिलगुणबाहुल्यात् कषाय इति । ननु, यदि तोयाग्निगुणबाहुल्यादम्लता तर्हि उष्णजलस्यापि अम्लता कुतो न स्यात्? नैष दोषः, नहि भूतसंसर्गमात्रादेव रसविशेषो निष्पद्यते, किंतर्हि विशिष्टां परिणतिमपेक्षते; तद्यथा–पार्थिवस्यापि लोष्ट्रस्याग्नितप्तस्य पृथिव्यग्निगुणबाहुल्येऽपि न लवणता भवति, लवणत्वसाधनविशिष्टविदाहासंभवादिति । एनमेवार्थं श्लोकेन कश्चिदाह,—"तोयाग्निगुणबाहुल्येऽप्यम्लत्वं नोष्णवारिणः । नैकस्माद्भूतसंयोगाद्विदाहाच्च रसा यतः"—इति । ननु, यदि शेषभूतयोगान्मधुरादिषड्विधत्वं तत्कथं पृथिव्यम्बुगुणबाहुल्यं मधुरेऽभिधाय मधुरेऽपि विशेषेऽपां कारणत्वमुच्यते; अत्र वदन्ति —आपो रसानामाधारकारणं अपां पृथिव्यामनुप्रवेशात् पृथिव्यपि आधारकारणमेव, तेन जलक्षिती अपि तदाधारतया रसानामभिव्यक्तौ, अभिव्यक्तेश्च मधुरादिरूपतामन्तरेण असंभवात् मधुरादिविशेषेऽपि कारणे भवतः; अग्न्यादयस्तु त्रयो नीरसतया मधुरादिविशेषे निमित्तकारणं प्राधान्येन भवन्ति, तद्व्यतिरेकेण अम्लादिरसाभावात्; रसाभिव्यक्तेश्च अग्न्यादिभूतत्रयसन्निधानं विनाऽनुपलब्धेरभिव्यक्तौ अपि कारणत्वमग्न्यादीनां भवति । तदुक्तं चरके,—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा । निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः"—इति ( च. सू. स्था. अ. १ )। अत्र हि

---

१ बाहुल्यादिति बाहुल्यशब्देन सर्वेष्वेव रसेषु सर्वभूतानां सान्निध्यमस्ति, कचित् कस्यचिद्भूतगुणस्य बाहुल्याद्रसविशेषो भवतीति दर्शयति ।

२ चरके तु "सोमगुणातिरेकान्मधुरः" इति पठ्यते; तत्र सोमशब्देन पृथ्वीजलयोरेव ग्रहणं, उभयोरपि सौम्यत्वात् ।

३ चरके तु "सलिलाग्निभूयिष्ठत्वाल्लवणः" 'पृथ्व्यग्निभूयिष्ठत्वादम्लः'–इति पठ्यते; अस्मिंश्च विरोधे कार्यविरोधो नास्त्येव, भूमिजलयोः सौम्यत्वेनैकरूपतया कार्यविरोधाभावात् ।

चकारद्वयात् जलक्षित्योरपि विशेषे कारणत्वं, तथा खादीनां च निर्वृत्तौ अपि कारणत्वमुक्तं; तेन मधुरे विशेषेऽपि अपां कारणत्वात् सुष्ठूक्तं 'पृथिव्यम्बुगुणबाहुल्यात् मधुरः' इति, एवं 'तोयाग्निगुणबाहुल्यादम्लः'–इत्यपि समाधेयम् । नच यथा भूमितोयाधिक्यात् मधुरः, एवं तोयवाय्वाधिक्यात् भूम्याकाशाधिक्यात् वा रसान्तरोत्पत्तिः कुतो न स्यादिति वाच्यम्, स्वभावस्यापर्यनुयोज्यत्वात्; यतः पृथिव्यादिभूतानामेवायं स्वभावः —यत्–केनचिदेव भूताधिक्येन व्यवस्थिता रसविशेषोत्पादकाः, न पुनर्यत्किंचिद्भूताधिक्येनेति । अत एव तोयाग्न्योः परस्परविरोधात् कथमेककार्यारम्भकत्वमित्यपि अपास्तमुक्तयुक्तेरेव । ननु च, रसानां षड्विधत्वमनुपपन्नं, अन्तरीक्षजलादौ अव्यक्तस्य सप्तमरसस्यापि विद्यमानत्वात् । नैवं, मधुरादीनामेव षण्णां तत्र अन्तरीक्षजलादौ अव्यक्तीभावेन तस्य अव्यक्तरसस्य मधुरादिभ्योऽभिन्नत्वात् । नच क्षारस्यापि रसत्वात् सप्तमत्वापत्तिरिति वाच्यं, तस्य क्रियागुणयोगेन द्रव्यत्वात्; तदुक्तं चरके–, "क्षरणात् क्षारो नासौ रसः"–इत्यादि (च. सू. स्था. अ. २६)। तत्सहचरितस्य लवण एवान्तर्भावो, लवणवर्गपाठात् । एते च रसाः परस्परसंयोगात् सप्तपञ्चाशद्भवन्ति, ते पुनश्चरकसुश्रुतादौ अवगन्तव्याः, इह तु विस्तरभयान्नोक्ताः ॥ १ ॥

**मधुरो धातुविवर्धन आयुर्बलवर्णतृप्तिकृत्कण्ठ्यः ॥**
**सन्धानकृन्मुखादिह्लादकरः स्निग्धगुरुशीतः ॥ २ ॥**

संप्रति रसेषु मध्ये आयुष्यत्वादिगुणयोगेन मधुरस्याद्यनिहितत्वात् तद्गुणान् प्रथममभिदधते—मधुर इत्यादि । संधानकृदिति उरःक्षतादीनाम् । मुखादीति आदिशब्दात् घ्राणजिह्वाकण्ठोष्ठग्रहणम् । स्निग्धगुरुशीत इत्यनेन वातपित्तहन्तृत्वं बोध्यम् । एतच्च शीतत्वमौत्सर्गिकं, तेन क्वचिन्मधुरस्य उष्णत्वमपि ज्ञेयम् । तदुक्तं चरके,–"मधुरं

४ "क्षरणात्क्षारो नासौ रसः, द्रव्यं तदनेकरससमुत्पन्नमनेकरसं कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाभिनिर्वृत्तम्" इति चरकः (च. सू. स्था. अ. २६.) क्षरणादधोगमनक्रियायोगात्क्षारो द्रव्यं नासौ रसः, रसस्य हि निष्क्रियस्य क्रियानुपपन्नेत्यर्थः; क्षरणं च क्षारस्य पानीययुक्तस्याधोगमनेन, वदन्ति हि लौकिकाः,–"क्षारं स्रावयामः" इति, शास्त्रं च,–"छित्वा छित्वाऽऽशयात्क्षारः क्षारत्वात्क्षारयत्यधः"–इति; हेत्वन्तरमाह–द्रव्यं तदनेकरसोत्पन्नमिति अनेकरसेभ्यो मुष्ककापामार्गादिभ्य उत्पन्नमनेकरसोत्पन्नं, यतश्चानेकरससमुत्पन्नमतश्चानेकरसं, कारणगुणानुविधायित्वात्कार्यगुणस्येत्यर्थः, अनेकरसत्वं चाह–कटुकलवणभूयिष्ठमिति, भूयिष्ठशब्देनाप्रधानरसान्तरसंबन्धोस्तीति दर्शयति; हेत्वन्तरमाह–अनेकेन्द्रियार्थसमन्वितमिति क्षारो हि स्पर्शेन गन्धेन चान्वितः, तेन द्रव्यम्; रसे हि गुणे न स्पर्शो नापि गन्धः; हेत्वन्तरमाह–करणाभिनिर्वृत्तमिति करणेन भस्मस्रावादिनाऽभिनिर्वृत्तं कृतमित्यर्थः, न रसोऽनेन प्रकारेण क्रियत इति भावः"–इति चक्रटीका ।

किंचिदुष्णं स्याद्यथा चानूपमामिषम्”—इति ( च. सु. स्था. अ. २६ )। यद्यपि गुणानां निर्गुणत्वेन रसेषु स्निग्धादयो गुणा न सन्त्येव, तथाप्युपचाराद्द्रव्यगुणा एव रसेषु निर्दिश्यन्ते। तदुक्तम्,—“गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये। रसेषु व्यपदिश्यन्ते साहचर्योपचारतः”—इति ( वा. सू. स्था. अ. ९ )। साहचर्यमेकार्थसमवायः। उपचारस्य किं फलमिति चेद्? ब्रूमः, द्रव्यगुणकथने मधुरादिरसनिर्देशेनैव अनुक्ता अपि स्निग्धत्वादिगुणाः प्रायो मधुररससहचारिणो ज्ञेयाः। तेन मधुरत्वं निर्दिश्य पुनः स्निग्धत्वादि न वाच्यं, साहचर्यलब्धत्वात्; यत्र वा उच्यते तत्रातिशयार्थं स्पष्टार्थं च ज्ञेयम् ॥ २ ॥

**अम्लोरुचिर्दीप्तिकरो मन इन्द्रियबोधनो हृदयतर्पी ॥**
**वातार्जवकृद्धल्यः कण्ठदहः स्निग्धलघुरुष्णः ॥ ३ ॥**

अम्लरसगुणानाह—अम्ल इत्यादि। दीप्तिर्वह्नेः। बोधनं प्रसादः। आर्जवमनुलोमनम्। अत्रापि अम्लस्योष्णत्वं प्रायिकं, तेन आमलकस्याम्लस्यापि शीतत्वं न विरुध्यते। तेन रसे गुणा विशेषाबाधेन ग्राह्या भवन्तीति निर्गलितार्थः ॥ ३ ॥

**लवणः क्लेदनः पाचनो दीपनो विच्छेदनः सरस्तीक्ष्णः ॥**
**कफविष्यन्दी रुचिकृत् स्निग्धगुरूष्णो मुखविशोधी ॥ ४ ॥**

लवणरसगुणानाह—लवण इत्यादि। अत्रापि लवणस्योष्णत्वं प्रायिकमिति सैन्धवस्य शैत्यं न विरुध्यते। अत्र केचित् संगिरन्ते—अम्बुतेजोबाहुल्यादम्लो रसो निष्पद्यते, तदत्र अम्बुतेजोभ्यामारब्धेऽम्ले किं तोयगुणाधिक्यात् शैत्यं भवतु, किंवा अग्निगुणाधिक्यात् उष्णत्वं; एवं लवणेऽपि पृथिव्यग्निगुणारब्धे वाच्यं; तौ पुनरम्ललवणौ आग्नेयौ एव परं सुश्रुतेन प्रतिपादितौ, यथा—“कट्वम्ललवणा आग्नेयाः”—इति; तदत्र वक्तव्यो हेतुविशेषः, येन परस्परविरुद्धगुणबहुलस्य केवलमाग्नेयत्वमेव स्यादिति। उच्यते, अम्लरसादौ परस्परविरोधिभूतद्वयगुणबहुलेऽपि परस्यैव भूतस्य गुणाः पूर्व-

---

५ “पृथिव्यादौ पृथिव्यादिमहाभूतारब्धे द्रव्ये रसाश्रये गुर्वादयो गुणाः परमार्थतः आश्रिता नतु रसेषु मधुरादिषु। यत्तु रसेषु व्यपदिश्यन्ते तत्साहचर्योपचारतः, सह चरतीति सहचरस्तस्य भावः साहचर्यम्। यस्मिन्नेव गुडादौ द्रव्ये मधुरो रस आश्रितस्तस्मिन्नेव गुरुर्गुणः अप्याश्रित इति मधुररसगुरुगुणयोः सहचरभावः। साहचर्येण तुल्याश्रयत्वेनोपचारः साहचर्योपचारस्तस्मात्साहचर्योपचारतो गुर्वादयो गुणा रसेषु मधुरादिषु व्यपदिश्यन्ते। यथा—गुरुर्मधुरो, लघुरम्ल इत्यादि। न पुनः परमार्थतो रसेषु गुर्वादयः सन्ति। अस्ति च साहचर्येण व्यपदेशः, यथा—घृतसहचरेण घृतस्थेनाग्निना दग्धो घृतदग्ध इत्युच्यते” इति अरुणदत्तटीका ॥

भूतगुणानभिभूय स्वभावमुष्णत्वं दर्शयन्ति; कुत इति चेत्, उष्णजलादौ प्रत्यक्षदृष्टत्वात्। यद्येवं सर्वेष्वेव रसेषु ( कट्वम्ललवणेषु ) लघुत्वप्रसङ्गः, अग्निगुणाधिक्यादेव । नैतदस्ति, उष्णत्वेन हि उष्णजलादौ शीतत्वमभिभूयमानं दृष्टं; सुवर्णरजतलौहादिषु तु गुरुत्वमनभिभूतमेव दृश्यते । तेन अम्लादिगुरुत्वे पूर्वभूतगुणा एव प्रधाना इति । भवति चात्र—"भूतद्वयगुणे मुख्ये मुख्यो गुणविशेषकृत् । स्नेहगौरवयोः पूर्वः परः स्यादौष्ण्यशैत्ययोः"—इति । अत्र स्नेहगौरवयोर्विरोधिनोः रौक्ष्यलाघवयोर्ग्रहणमूह्यम् । वस्तुतस्तु भूतानामेव अयं स्वभावो—यत्—भूतद्वयसमारब्धेऽपि रसे कस्यचिद्भूतस्य कश्चिदेव गुणो व्यक्तत्वेनोपलभ्यते न सर्व इति । भूतस्वभावे च अदृष्टविशेष एव कारणमुन्नेयमिति ॥ ४ ॥

**कटुरास्यं शोधयति घ्राणाक्षिविरेचनः कृमीन् हन्ति ॥**
**रसनोद्वेगकृदुष्णो लघुरूक्षः कुष्ठहारी च ॥ ५ ॥**

कटुरसगुणानाह—कटुरित्यादि । अत्र लघुरूक्षत्वेनावृष्यत्वं कटोर्ज्ञेयं; तदपि प्रायिकं, तेन पिप्पलीनागरयोः कटुरसयोरपि वृष्यत्वमुपपन्नं भवति ॥ ५ ॥

**तिक्तो न रोचते स्वयमरोचकघ्नो विषघ्नश्च ॥**
**दीपनपाचनशोधनरूक्षः शीतो लघुश्चापि ॥ ६ ॥**

तिक्तरसगुणानाह—तिक्त इत्यादि । शोधन इति व्रणस्य स्तन्यस्य च । अत्र अर्कागुरुगुडूचीनां तिक्तानामप्यौष्ण्यं पूर्ववत् समर्थनीयम् ॥ ६ ॥

**तुवरो हिमगुरुरूक्षस्तम्भी शमनश्च पीडनो ग्राही ॥**
**व्रणपाकार्तिक्लेदान्निहन्ति कण्ठं च बध्नाति ॥ ७ ॥**

कषायरसगुणानाह—तुवर इत्यादि । तुवर इति कषायः । ननु च, "रूक्षः शीतो लघुश्च"—इति चरकेणोक्तं अत्र च गुरुत्वमुक्तमिति विरोध इति चेत् । नैवं, तत्रापि "अलघुः" इत्यकारप्रश्लेषात् गुरुरित्यर्थष्टीकाकृद्भिर्व्याख्यात इति । वाग्भटेऽप्युक्तं,—

६ "ननु, उष्णशीताभ्यामग्निसलिलाभ्यां कृतस्य लवणस्याप्युष्णशीतत्वेन भवितव्यं, तत्कथं लवणमुष्णं स्यात् ? नैवं, यतः भूतानामयं स्वभावः—यत्—केनचित्प्रकारेण संनिविष्टानि कंचिद्गुणमारभन्ते न सर्वं, यथा—मकुष्ठकेऽद्भिर्मधुरो रसः क्रियते न स्नेहः, तथा सैन्धवे वह्निनाऽपि नोष्णत्वमारभ्यते; अयं च संनिवेशोऽदृष्टप्रभावकृत एव, स च कार्यदर्शनोन्नेयः, तेन यत्र कार्यं दृश्यते तत्र कल्प्यते, यथा—लवणे उष्णत्वादग्निर्विष्यन्दित्वाच्च जलमनुमीयते; आगमवेदनीयश्चायमर्थो नास्मद्विधानां कल्पनाः प्रसरन्ति; एतेन यदुच्यते—'तोयवातादिसंयोगादिभ्यः किमिति रसान्तराणि नोत्पद्यन्ते, तदपि भूतस्वभावापर्यनुयोगादेव निरस्तम्—" इति चक्रः ।

"कषायः कफपित्तघ्नो गुरुरस्रविशोधनः"—(वा. सू. स्था. अ. १०) इति ।
यत्तु सुश्रुते "कषायो रसो लाघवाद्वातं वर्धयति"—(सु. सू. स्था. अ. ४२)
इत्युक्तं तत्तस्य लघुपाकतयेति विरोधं परिहरन्ति । स्तम्भी स्तम्भनः । अत्रापि कषा-
यस्य हिमत्वं स्तम्भित्वं चौत्सर्गिकं, तेन हरीतक्यां कषायरसस्य उष्णत्वं भेदकत्वं चा-
पवादतया समर्थनीयम् । शमन इति संशमनः । पीडन इति व्रणस्य ॥ ७ ॥

**शीतं कफमारुतकृद्वीर्यं गुरु पित्तनाशनं बल्यम् ॥**
**उष्णं कफवातहरं पित्तकरं लघु वृष्यं च ॥ ८ ॥**

संप्रति रसगुणाभिधानमनु वीर्यगुणा वाच्याः, तत्र वीर्यस्वरूपमेव प्रथमं निरू-
प्यते—वीर्यं शक्तिः, सा च पृथिव्यादीनां भूतानां यः सारभागस्तदतिशयरूपा
बोध्या; सा च द्विविधा, चिन्त्याचिन्त्यक्रियाहेतुत्वेन; तत्र चिन्त्यक्रियाहेतुर्या द्रव्यर-
सादीनां स्वस्वकर्मणि स्वभावसिद्धा शक्तिः, अचिन्त्यक्रियाहेतुश्च प्रभावापरपर्याया
द्रव्याणां रसाद्यननुरूपकार्यकरणशक्तिः । उक्तं च,–"भूतप्रसादातिशयो द्रव्ये पाके
रसे स्थितः । चिन्त्याचिन्त्यक्रियाहेतुर्वीर्यं धन्वन्तरेर्मतम्"—इति। एतेन द्रव्यरसपाकानां
स्वस्वकार्यकरणसामर्थ्यं वीर्यमित्यर्थः । यत्पुनश्चरके—"वीर्यं तु क्रियते येन या
क्रिया"—(च. सू. स्था. अ. २६) इत्यनेन रसादीनामपि वीर्यत्वमुक्तं तद्धर्मधर्मि-
णोरभेदादेव समर्थनीयम् । न चैवं द्रव्यस्यापि वीर्यत्वप्रसङ्गः, येनेति करणे तृतीया,
करणस्यैव शक्तित्वात्, द्रव्यस्य च कर्तृत्वात्; एतेन द्रव्यकर्तृके रसादिकरणके
कार्ये रसादीनामपि वीर्यत्वमित्यर्थः । सुश्रुतेऽप्युक्तम्–,"येन कुर्वन्ति तद्वीर्यम्"—
(सु. सू. स्था. अ. ४१) इति । अत्र केचित्—ननु, यदि शक्तिरेव वीर्यं न तर्हि
शीतोष्णादिलक्षणं, अथ शीतोष्णादिलक्षणं न तदा शक्तिलक्षणमिति । सत्यं,
परमार्थतः शक्तिरेव वीर्यं, सा पुनर्बलवत्क्रियानिर्वर्तनक्षमा रसादिनाऽप्योगान्नि-
रुपाधिरिति तस्याः शीतोष्णादयो गुणा उपाधित्वेनाङ्गीकृताः, ते तु द्रव्यसमवायिनो
रसादिषु पुनरुपचरितवृत्तय इति । उक्तं च,—"गुणाः कर्मव्यवस्थायै द्रव्याणां
रसपाकयोः । शक्तेः कर्मसु शक्ता ये निरुपाधेरुपाधयः"—इत्याहुः । यत्पुनः "मृदु-
तीक्ष्णगुरुलघुस्निग्धरूक्षोष्णशीतलं । वीर्यमष्टविधं केचित्केचिद्द्विविधमास्थिताः ॥
शीतोष्णम्"—इति मतभेदेनाष्टविधं द्विविधं वा वीर्यमित्युक्तं चरकेण तत्पारिभाषि-
कवीर्यपुरस्कारेण । वैद्यके हि रसविपाकप्रभावातिरिक्ते प्रभूतकार्यकारिणि गुणे वीर्य-
मिति संज्ञा । तेनाष्टविधवीर्यवादिमते पिच्छिलविशदादयो गुणा न रसादिविपरीतं
कार्यं प्रायः कुर्वन्तीति तेषां रसाद्युपदेशेनैव ग्रहणं; मृद्वादीनामष्टानां तु रसाद्यभिभा-
वकत्वमस्ति । यथा–पिप्पल्यां कटुरसकार्यं पित्तकोपनमभिभूय तद्गते मृदुशीतवीर्यं
पित्तमेव शमयतः, तथा कषाये तिक्तानुरसे महति पञ्चमूले तत्कार्यं वातकोपनमभिभूय
उष्णेन वीर्येण तद्विरुद्धं वातशमनमेव क्रियते, तथा मधुरेऽपीक्षौ शीतवीर्यत्वेन

वातवृद्धिरित्यादि । सुश्रुतेऽप्युक्तम्,—"एतानि खलु वीर्याणि स्वबलगुणोत्कर्षाद्रसमभिभूयात्मकर्म दर्शयन्ति"—( सु. सू. स्था. अ. ४० ) इति । शीतोष्णवीर्यवादिमतं तु अग्नीषोमीयत्वाज्जगतः शीतोष्णयोरेव प्राधान्याज्ज्ञेयम् । उक्तं च,—"नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ । व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित्"—इति ( वा. सू. स्था. अ. ९ ) । प्रथमवादिमते शक्तिमात्रं वीर्यं, तद्योगात् रसादीनामपि वीर्यसंज्ञा; पारिभाषिकवीर्यवादिमते तु शक्तिविशेषो वीर्यं, तद्योगात् मृदुतीक्ष्णादीनामेव वीर्यसंज्ञा नापरेषां गुणानामिति । शास्त्रे व्यवहारस्तु पारिभाषिकवीर्यनयेनैवेति । भवन्ति चात्र,—"शक्तिमात्रं तु वीर्यं स्यादिति केचिद्बुधा विदुः । तन्मते द्रव्यरसयोः पाकस्य च गुणस्य च ॥ मृद्वादेः स्वक्रियोत्पादे शक्तिर्वीर्यमिति स्थितिः । यदुक्तं चरके—'वीर्यं क्रियते येन या क्रिया ॥ नावीर्यं कुरुते किंचित् सर्वा वीर्यकृता क्रिया । इत्यनेन रसादीनां वीर्यत्वं तदभेदतः ॥ मृद्वादयो गुणा अष्टौ वीर्याणीत्यूचिरे परे । यस्मात् सर्वगुणोत्कृष्टाः शक्त्युत्कर्षयुता अमी ॥ व्यवहारोपयुक्ताश्च नेदृशास्त्वपरे गुणाः । तस्मान्न ते वीर्यसंज्ञा इति शास्त्रविदां मतम् ॥ अन्ये शीतोष्णभेदेन वीर्यं द्विविधमूचिरे । अग्नीषोममयं विश्वं यत एतच्चराचरम्"—इति । यद्यपि अष्टविधमेव वीर्यं भवति तथाऽपि तेषु एव शीतोष्णयोः प्राधान्यात् तद्गुणमेवाह—शीतमित्यादि ॥ ८ ॥

**शीतं वीर्येण यद्द्रव्यं मधुरं रसपाकयोः ॥**
**तयोरम्लं यदुष्णं च यच्चोक्तं कटुकं तयोः ॥ ९ ॥**

इदानीं रसद्वारेण द्रव्याणां वीर्यमाह—शीतमित्यादि । यद्द्रव्यं रसे पाके च मधुरं तद्वीर्येण शीतं ज्ञेयम्, तथा तयोः रसपाकयोर्यदम्लं तद्वीर्येणोष्णं ज्ञेयम्, तथा यच्च द्रव्यं तयोः रसपाकयोः कटुकमुक्तं तदपि वीर्येणोष्णं ज्ञेयमिति शेषः । किंवा 'यच्चोष्णं कटुकं तयोः'—इति पाठः । प्रभावोऽचिन्त्यक्रियाहेतुवीर्यमेवेति शक्तिविशेष एव प्रभाव इत्यभिधीयते । प्रभावसत्त्वे च चरके मानमप्युक्तम् । यथा,—"रसवीर्यविपाकानां सामान्यं यत्र लक्ष्यते । विशेषः कर्मणां चैव प्रभावस्तस्य स स्मृतः" इति ( च. सू. स्था. अ. २६ ) । सामान्यमिति तुल्यता, कर्मणां पुनर्विशेषो न तुल्यतेत्यर्थः । एतेन द्रव्ययोर्द्वयो रसादिसाम्ये सत्यपि एकस्मिन् द्रव्ये जायते कार्यविशेषः इतरत्र तु न जायत इत्यत्र यत्कारणतया

---

७ व्यक्तं महदादि स्थूलभूतान्तानि त्रयोविंशतितत्त्वानि विकृतिसंज्ञकानि, अव्यक्तं प्रकृतिः ( पुरुषश्च ) ।

८ "वीर्यमिति शक्तिः, येनेति रसेन वा विपाकेन वा प्रभावेण वा गुर्वादिपरत्वादिभिर्वा गुणैर्या क्रिया तर्पणह्लादनशमनादिरूपा क्रियत इत्युपदिश्यते तस्यां क्रियायां तद्रसादि वीर्यं, अत एवोक्तं सुश्रुते,—'येन कुर्वन्ति तद्वीर्यं'—इति" चक्रः ।

वाच्यं तदेव प्रभाव इत्यर्थः। एतदुदाहरणं च तेनैवोक्तम्,—"कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः। तद्वद्दन्ती प्रभावात्तु विरेचयति मानवम्"—इति (च. सू. स्था. अ. २६)। तद्वदिति चित्रकतुल्यरसवीर्यपाका। एतेन चित्रकस्य रसाद्यैस्तुल्यायामपि दन्त्यां यद्विरेचकत्वरूपं विशिष्टं कर्म तत्स्वकारणं प्रभावमनुमापयतीति भावः। तथा रसादिसाम्याभावेऽपि रसादिजन्यत्वेन यत्कार्यं न अवधारयितुं पार्यते तदपि प्रभावकृतमेव मन्तव्यं; यथा–मण्यादीनां विषहरणादिकं कर्म। तदुक्तं चरके, "मणीनां धारणीयानां कर्म यद्विविधात्मकम्। तत्प्रभावकृतं तेषां प्रभावोऽचिन्त्य उच्यते"—इति (च. सू. स्था. अ. २६)। विविधात्मकमिति विषहरणशूलहरण-लोहाकर्षणादि ॥ ९ ॥

**कटुर्विपाकः शुक्रघ्नो बद्धविड्वातलो लघुः ॥**
**स्वादुर्गुरुः सृष्टमलो विपाकः कफशुक्रलः ॥**
**पाकोऽम्लः सृष्टविण्मूत्रः पित्तकृत् शुक्रनुल्लघुः ॥ १० ॥**

इदानीं विपाकगुणा वाच्याः, अतो विपाकस्वरूपं प्रथमं निरूप्यते—अवस्थापाकापेक्षया विशिष्टः पाको विपाकः। विपाकशब्देनेह लक्षणया विपाकाधेय आहारस्य रसविशेषो गौरवेण लाघवेन वा युक्तोऽभिधीयते। उक्तं च वाग्भटेन,—"जाठरेणाग्निना योगाद्यदुदेति रसान्तरम्। रसानां परिणामान्ते स विपाक इति स्मृतः"—(वा. सू. स्था. अ. ९) इति। अत्र रसानां परिणामा मधुराम्लकटुरूपास्त्रयोऽवस्थापाकाः षड्रसस्यैवान्नस्य आमाशयादिस्थानसंबन्धमहिम्ना जायन्ते, ते च चरके ग्रहणीचिकित्सिते "अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः"—(च. चि. स्था. १९) इत्यादिना उक्ता अनुसन्धेयाः। तेषामन्तेऽवसाने पुनर्जाठराग्निसंयोगे सति यद्रसान्तरं रसविशेष उदेति स विपाक इत्यर्थः। इह केचिदाचक्षते—प्रतिरसं पाकः—अम्लोऽम्लस्य, मधुरो मधुरस्य, लवणो लवणस्य, कटुकः कटुकस्य, तिक्तस्तिक्तस्य, कषायः कषायस्य इति षडेव विपाकाः; किमत्र प्रमाणमिति चेत्, उच्यते—यथा—क्षीरमतिपच्यमानमपि मधुरमेव स्यात्, यथा वा शालियवादय उप्ताः प्ररूढाः फलिताश्च शाल्यादिस्वरूपा एव भवन्ति; तथा मधुरादयोऽपि निष्ठापाकेऽपि मधुरादिस्वरूपा एव भवितुमर्हन्तीति। उक्तं च,—"उप्ताः षष्ठिकमाषाद्या बाह्यपकाश्च षड्रसाः। यान्ति नान्यत्वमित्येवं पाकः प्रतिरसं भवेत्"—इति। अन्येतु ब्रुवते—रसा द्विविधा बलवन्तोऽबलवन्तश्च; बलवत्त्वं च व्यक्तत्वेन मात्राबाहुल्येन वा, अबलवत्त्वं पुनरेतद्विपर्ययेण; तत्र अल्पतया अबलवन्तो रसा बलवतां वशमायान्तीति; तेन निष्ठापाके बलवता रसेन दुर्बलरसाभिभवान्न रसप्रतिनियमेन मधुरस्य मधुर एव पाकोऽम्लस्य चाम्ल एवेत्यादि, प्रतिनियमाभावाच्चानवस्थितः पाक इति। अनियतत्वपक्षेऽपि षट्कत्वमेव, कदाचित् कस्यचित् संभवादिति। उक्तं च—"बहवोऽभिभवन्त्यल्पान् बहिर्मिश्रीकृता रसाः।

तेनानिश्चितमेवैके पाकमाहुर्मनीषिणः"—इति । अन्ये तु वातादिभ्यो दोषेभ्य एव त्रीन् पाकानिच्छन्ति—कफात् वातकफात् मधुरः, कफपित्तात् अम्लः, वातात् पित्तात् वातपित्ताच्च कटुक इति । तदुक्तम्,—"कफात् वातकफात् स्वादुरम्लः पित्तकफोद्भवः । दोषैस्त्रयोऽनिलात् पित्तात् वातपित्तात् कटुर्मतः"—इति । तदेतत् मतत्रयं प्रमाणशून्यत्वादुपेक्षणीयमेव । किंच प्रतिरसं रससदृशः पाकस्तथा बलवत्पराधीनता च पाकस्य रसद्वारप्रतिपाद्यमानकार्येणैव लभ्यते; तेनैतत् पक्षद्वयमपि न निष्ठापाके चिन्तनीयं, रसस्वरूपनिरूपणेनैवोक्तार्थत्वात् । दोषावस्थाजन्यश्च पाक उपपादकहेत्वभावात् आगमशून्यत्वाच्च प्रेक्षावद्भिरुपेक्षणीय इति । चरकेण तु त्रय एव विपाका अङ्गीकृताः कट्वम्लमधुरभेदेन । अतस्तद्वचनमुपन्यस्यते—"कटुतिक्तकषायाणां विपाकः प्रायशः कटुः । अम्लोऽम्लं पच्यते स्वादुर्मधुरं लवणस्तथा" —इति (च. सू. स्था. अ. २६) । प्रायश इति वचनात् पिप्पलीकुलत्थादीनां रसाननुगुणपाकतां दर्शयति । पाकस्तु तेजःसंयोगरूपो रसेषु न संभवतीति कट्वादिशब्दैस्तदाधारद्रव्याण्युच्यन्ते; एतेन यत् कैश्चिदुच्यते—अवस्थापाकावसाने षड्रसस्यैव अन्नस्य कटुरसत्वेन तदानीं तिक्तादिरसानामभावात्तेषां विपाको नोपपद्यत इति तदपि अपास्तं, तिक्तादिरसानामभावेऽपि तदाश्रयद्रव्यस्य विद्यमानत्वादिति । वस्तुतस्तु अवस्थापाकत्रयेण तत्तदामाशयादिस्थानमहिम्ना मधुराम्लकटुरसा उद्भूताः परं क्रियन्ते, न तु सर्वथा प्राकृतरसाभिभवः; अन्यथा अवस्थापाकेन प्राकृतानां मधुरादिरसानां सर्वथा अप्राकृतत्वात्तेषां कफादिजनकत्वाभिधानं निरवकाशं स्यादिति । ननु, चरके,—"अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः" (च. चि. स्था. अ. १९)—इत्यादिना षण्णामेव रसानामविशेषेण अवस्थापाकवशात् कफादिजनकत्वमुक्तं, ततश्चात्र रसविशेषाणामेव दोषविशेषजनकत्वमुक्तं, तथा "कटुतिक्तकषायाणां विपाकः प्रायशः कटुः"—(च. सू. स्था. अ. २६) इत्यादिना च यो विपाक उक्तस्तत् सर्वं विरुध्यते, अवस्थापाकेनैव बाधितत्वादिति । नैवम्, नहि अवस्थापाकोऽयं रसस्वभावं निष्ठापाकं बाधते, किंच अवस्थायां स्वकार्यं करोति; तेन रसादयोऽपि स्वकार्यं कुर्वन्ति, अवस्थापाकोऽपि स्वीयं कार्यं करोति; यथा—मधुरतिक्ताद्यनेकरसे उपयुक्ते मधुरोऽपि स्वकार्यं करोति, तिक्तादयश्च स्वकार्यं कुर्वन्ति; अयं तु विशेषो—यदि मधुराख्यस्य अवस्थापाकस्य मधुरादयः श्लेष्मजनका रसा अनुगुणा भवन्ति, तदा स बहुश्लेष्माणं जनयति, यदा तु विपरीतकट्वादिपरिगृहीतो भवति, तदा स्तोकमात्रं कफं जनयति । एवं पित्तजनकावस्थापाकेऽपि वाच्यम् । "कटुतिक्तकषायाणाम्" इत्यादिना उक्तश्च निष्ठापाको रसमलविवेकसमकालो, भिन्नकाल एवावस्थापाकैः सममिति न विरोधः । स च भिन्नकालोऽपि अवस्थापाकजन्यदोषानुगुणतया अननुगुणतया वा अवस्थापाकाहितदोषाणां वर्धनं क्षपणं वा करोतीति निष्ठापाकाभिधानं शास्त्रे प्रयोजनवदेव । अन्ये तु ब्रुवते—न तावत् षड्रसादप्य-

न्नात् सामान्येन अवस्थापाकेऽपि कफोत्पत्तिः, किंतु षड्रस एवान्ने मधुरो य आहारांशः स उद्भूतः सन् कफं जनयति; तथा पित्तदोषकोपको य आहारभागस्तस्माद्विदाहावस्थायामुद्भूतादम्लरसात् पित्तमुत्पद्यते; एवं वायुरपि वायुजनकाहारांशात् कटुतावस्थायां भवतीति। एतच्च न संगतं, "अन्नस्य भुक्तमात्रस्य" इत्यादिग्रन्थविरोधात्; यतोऽत्र षड्रसस्यैव अन्नस्य सामान्येन अवस्थापाकात् कफादिजनकत्वं दर्शितं, न तु कस्यचिदाहारांशस्येति । यदि पुनः षड्रसाहारगतो यः श्लेष्मजनको भागः स एव स्थानमहिम्ना उद्भूतः सन्, सर्वमेवाहारमवस्थापाकसमये मधुरीकृत्य कफं जनयतीत्युच्यते तदानुमतमेव । अन्ये त्वाहुः—यत्—नान्नस्याग्निसंयोगान्मधुराद्यवस्थितं भवति, किंतु कफादिस्थानेषु मनुष्याणां स्वभावादेव मधुरादयो रसास्तिष्ठन्ति ते चान्नं स्वस्वभावं नीत्वा कफादीन् जनयन्ति। उक्तं हि तन्त्रान्तरे—"मधुरो हृदयादूर्ध्वं रसः कोष्ठे व्यवस्थितः। ततः संवर्धते श्लेष्मा शरीरबलवर्धनः। नाभीहृदयमध्येन रसस्त्वम्लो व्यवस्थितः॥ स्वभावेन मनुष्याणां तत्र पित्तं विवर्धते। अधो नाभ्यां तु स त्वेकः कटुकोऽवस्थितो रसः॥ प्रायः श्रेष्ठतमस्तत्र प्राणिनां वर्धतेऽनिलः । तस्माद्विपाकस्त्रिविधो रसानां नात्र संशयः"—इति। एतच्च तन्त्रान्तरं श्लेष्मपित्तगतमधुराम्लरसवायुप्राभाविककटुरसाभिप्रायेण वर्णनीयम्। ते च कफादिगता रसा अस्माकमप्यग्न्याशयपाकसहकारितया अनुमता एवेति । तस्माद्यथोक्त एवार्थो न्याय्य इति। अयं च विपाकाख्यो रसविशेषो न रसनेन्द्रियग्राह्यः, किंतु तत्तत्कार्येणेवोन्नीयते; यथा—कटुरसाया उष्णवीर्याया अपि शुण्ठ्या वृष्यत्वेन मधुरः पाकोऽनुमीयते, तथा लवणस्य सृष्टविण्मूत्रत्वेन मधुरः पाक उन्नीयते, तथा तिक्तकषाययोर्बद्धविण्मूत्रतया कटुपाक उन्नीयत इति। ननु, लवणस्य मधुरपाकित्वे पित्तरक्तादिकर्तृत्वमनुपपन्नं, तथा तिक्तकषाययोः कटुपाकित्वे च पित्तहन्तृत्वमनुपपन्नम् । नैवं, सत्यपि लवणस्य मधुरपाकित्वे तत्र लवणे उष्णवीर्यं यदस्ति तेन तत्पित्तरक्तादिकारकत्वं, विपाकस्तु तत्र पित्तरक्तकरणलक्षणे कार्ये बाधितोऽपि सृष्टविण्मूत्रादिलक्षणेन लक्ष्यत एव; तथा तिक्तकषाययोरपि कटुविपाको बलवता शीतवीर्येण बाधितत्वान्न पित्तजनकः, बद्धविण्मूत्रतया तु लक्ष्यत एव । एतेन यदुच्यते—लवणादिषु विपाको यदि रसवीर्याभ्यां बाधितः स्वकार्यकरो न स्यात् तत् किं तेनोपदिष्टेन इति तन्निरस्तं भवति; यतोऽस्त्येव सृष्टविण्मूत्रतादि तत्कार्यमिति। अन्ये तु एतद्दोषभयात् 'लवणस्तथा'—इत्यत्र तथाशब्देन विप्रकृष्टमम्लमाकृष्य लवणोऽम्लं पच्यते इति व्याख्यानयन्ति। तन्न "कट्वादीनां कटुविपाकः, अम्लोऽम्लस्य, शेषयोर्मधुरः"—इति जतुकर्णविरोधात् । नच त्रय एव विपाकाः कथं भवन्ति, तिक्तादयोऽपि कुतो न स्युरिति वाच्यम्; भूतस्वभावस्यापर्यनुयोज्यत्वात्। ननु, यत्र रसविपरीतः पाको यथा—लवणस्य मधुरः तिक्तकषाययोश्च कटुः, स उच्यतां; यस्तु समानगुणो मधुरस्य मधुरः, अम्लस्याम्लः, कटुकस्य कटुकः;

तत्कथनेन किं प्रयोजनं, यतो रसगुणैरेव तत्र विपाकगुणोऽपि ज्ञास्यते । नैवं, लवणादिवद्विसदृशरसान्तरोत्पादशङ्कानिरासार्थमपि तत्रानुगुणोऽपि विपाको वक्तव्य एव; तथा यत्र समानगुणो विपाकस्तत्र बलवत्कार्यं भवति, विपर्यये तु दुर्बलमिति ज्ञेयम् । सुश्रुतेन द्विविध एव विपाकोऽङ्गीकृतः मधुरः कटुकश्चेति, द्वैविध्ये च भूतानां गुरुलाघवेन द्वैविध्यमेव हेतुः; यदुक्तं तेनैव—"तत्र, पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति तद्गुणसाधर्म्यात् गुरुता लघुता च; तत्र पृथिव्यापश्च गुर्व्यः, शेषाणि च लघूनि तस्माद् द्विविध एव विपाको भवति"—इति ( सु. सू. स्था. अ. ४० )। अत्रापि सुश्रुतमते यद्यप्यम्ललवणौ मधुरविपाकौ तथापि तयोर्वातहरत्वे सृष्टविण्मूत्रतायां च मधुरकार्यकरत्वं, न पुनः पित्तहरत्वे; तथा तिक्तकषाययोः कटुविपाकयोरपि वातकर्तृत्वे बद्धविण्मूत्रतायां च कटुकार्यकरत्वं, न पुनः पित्तकर्तृत्वे; अचिन्त्यत्वात् प्रभावस्य । एतदेवोक्तं माधवेनापि,—"स्वाद्वादीनां स्वादुपाकः सुश्रुताचार्यसंमतः । तत्कथं पित्तजननौ स्यातामम्लपटू रसौ ॥ कटुपाकौ कथं पित्तनाशनौ तिक्ततूवरौ"—इति । सिद्धान्तेऽपि,—"अम्लपट्वोः फलं विद्यात् स्वादुपाकः कटुः पुनः । कषायतिक्तयोरित्थं सुश्रुताचार्यसंमतः"—इति । ननु, "पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यक् स्वान् गुणानभिवर्धयेत्"—इत्यनेन पञ्चधापि विपाकस्तेनैवोक्तः, तत्कथं न विरोध इति चेत्; नैवम्, उपाधिभेदेन विरोधाभावात्; तत्र हि भूतभेदमवलम्ब्य पञ्चधात्वं, अत्र तु लाघवगौरवरूपं भूतगुणद्वैविध्यमाश्रित्य द्वैविध्यमुक्तमिति न विरोधः, यथा—पञ्चभूतात्मकत्वेऽपि द्रव्याणां सौम्याग्नेयत्वाद्द्वैविध्यमिति । यत्पुनः सुश्रुतेनाम्लपाको न मन्यते तच्चरकमतानुयायिनो न सहन्ते, यतोऽम्लपाकतयैव व्रीहिकुलत्थादीनां पित्तकर्तृत्वमुपपद्यते, अथ मन्यसे—व्रीह्यादेरुष्णवीर्यत्वेन तत्र पित्तकर्तृत्वं? तदसत्, मधुरस्य व्रीहेस्तन्मते मधुरविपाकस्य उष्णवीर्यतायामपि सत्यां न पित्तकर्तृत्वमुपपद्यते, रसविपाकाभ्यामेकस्य वीर्यस्य बाधनीयत्वात्; किंच अम्लपाकत्वाद् व्रीह्यादेः पित्तमम्लगुणमुत्पद्यते, यदि तु उष्णवीर्यताकृतं स्यात् तदा कटुगुणभूयिष्ठं पित्तं स्यात्, दृश्यते च—व्रीहिभक्षणादम्लोद्गारादिना अम्लगुणभूयिष्ठतैवेति; किंच "पृथिवीसोमगुणातिरेकान्मधुरः पाको भवति, वाय्वग्न्याकाशातिरेकाच्च कटुर्भवति"—इति पक्षे यदा व्यामिश्रगुणातिरेको भवति, तदा सोमाग्न्यात्मकस्याम्लस्य उत्पादः कथं प्रतिक्षेपणीयः; अथवा तन्त्रकारयोः किमनयोरनेन वचनमात्रविरोधेन कर्तव्यम्; यतो यदम्लपाकं चरको ब्रूते तत् सुश्रुतेन वीर्योष्णमिति कृत्वा समाधीयते; अनेन न कश्चित् द्रव्यगुणे विरोधः; यत्तु सुश्रुते अम्लपाकनिरासार्थं दूषणमुच्यते,—"पित्तं हि विदग्धमम्लतामुपैति"—( सु. सू. स्था. अ. ४० ) इत्यादिना तदनभ्युपगमादेव निरस्तमिति । विपाकगुणानाह—कटुरित्यादि ॥ १० ॥

**शालयो मधुराः शीता लघुपाका बलप्रदाः ॥**
**पित्तघ्नाल्पानिलकफाः स्निग्धवद्धाल्पवर्चसः ॥ ११ ॥**

संप्रति द्रव्याणां गुणे वक्तव्ये द्रव्येषु चान्नस्य प्राधान्यात्, अन्नेषु च शूकधान्यानां शूकधान्येषु च शालीनां, अतः प्रथमं तेषां सामान्यगुणानाह—शालय इत्यादि । अत्र शालिशब्देन हैमन्तिकं धान्यमुच्यते; यत्तु अकण्डितशुक्लत्वेन शालित्वमुच्यते, तद्ग्रैष्मिकेषु षष्टिकादिषु शारदेषु व्रीहिषु च गतत्वात्, सकलशाल्यव्यापकत्वाच्च न युक्तम् । लघु शीघ्रं पाको येषां ते लघुपाकाः, लघुगुणयोगात्; शीघ्रपाका इत्यर्थः । तत्रान्तरेऽप्युक्तं,—"अन्नपानविधावुक्तं यद्द्रव्ये गुरुलाघवम् । अग्निना तद्विजानीयात् पचनेन चिराचिरम्"—इति । न तु लघुगुणयुक्तः पाको येषामित्यर्थः, यतस्तादृशः पाकः कटुरेव भवति; तथा सति स्निग्धत्वं बलावहत्वं चानुपपन्नं स्यात् । ननु, एवं बद्धाल्पवर्चस्त्वं मधुरपाके चानुपपन्नं, यदुक्तम्,—"स्वादुर्गुरुः सृष्टमलो विपाकः कफशुक्रलः"—( च. सू. स्था. अ. २६ ) इति । नैष दोषः, शालीनां मधुरपाकित्वेऽपि बद्धाल्पवर्चस्त्वं द्रव्यप्रभावात् । नन्वेवं कटुपाकत्वेऽपि स्नेहादयो द्रव्यप्रभावादेव भविष्यन्तीति चेत्; नैतदस्ति, शालीनां कटुपाकाङ्गीकारे बहुतन्त्रविरोधप्रसङ्गात्; तथाच चरकः,—"शीता रसे विपाके च मधुराः स्वल्पमारुताः । बद्धाल्पवर्चसः स्निग्धा बृंहणाः शुक्रमूत्रलाः"—( च. सू. स्था. अ. २७ ) इति, तथा वाग्भटेऽपि,—"स्वादुपाकरसाः स्निग्धा"—( वा. सू. स्था. अ. ६ ) इत्यादि । मधुरपाकत्वेऽपि शालीनां शीघ्रपाकित्वं, प्रकृतिलघुत्वात् । अत एव मात्राशितीये—"शालिषष्टिकमुद्गलावकपिञ्जलैणशशशरभशम्बरादीन्याहारद्रव्याणि प्रकृतिलघून्यपि मात्रामेवापेक्षन्ते"—( च. सू. स्था. अ. ५ ) इत्यनेन लघुत्वं शीघ्रपाककारणमुक्तम् । अन्ये पुनरत्र पाकद्वयमङ्गीकृत्य सुश्रुतचरकयोरविरोधं मन्यन्ते; तत्रैको रसपाकोऽन्यश्च द्रव्यपाकः; यदाह विश्वामित्रः,—"पूर्वं रसा विपच्यन्ते पश्चात् द्रव्यं विपच्यते । पूर्वस्तत्र तु भाक्तः स्यादुत्तरः पारमार्थिकः"—इति, तेन रसपाकमाश्रित्य मधुररसपाकित्वेन शालीनां गुरुपाकित्वं चरकेणाङ्गीकृतम्, पुनस्तेनैव निष्ठापाकमभिप्रेत्य मात्राशितीये "शालिषष्टिक—" इत्यादिना लघुपाकित्वमप्यङ्गीकृतम्; सुश्रुतेनापि निष्ठापाकमभ्युपेत्य शालीनां लघुपाकित्वमुक्तम्, स्निग्धत्वं बलावहत्वं च रसपाकमभ्युपेत्य उक्तमिति न विरोधः । तत्तु न सम्यक्, रसपाकस्य पूर्वमेव निराकृतत्वात्, अवस्थापाकेन सर्वस्यैव रसस्य कटुपाकित्वे तदानीं मधुरादिरसासंभवादिति तेजःसंयोगरूपः पाको रसे न संभवत्येवेति पूर्वमेवोक्तमिति । यच्चोक्तं विश्वामित्रेण तदप्याहारस्यामपच्यमानपक्वावस्थाभिर्गुणीभूताहारपरिणामेन । गुणभूतस्वरूपरसपरिणामाङ्गीकारः पुनरामविदाहपक्वावस्थासु प्रत्यनीकरसानामपि कफपित्तवातकारित्वविधानार्थम् । तथाहि अवस्थायां कटुतिक्तकषाया अपि आमाशयस्थानमहिम्ना प्राप्तमधुरभावाः कफं कुर्युः, विदाहे पुनरम्लभावेनाशयप्र-

भावजेन मधुरतिक्तकषाया अपि पित्तमावहन्ति, एवं पक्काशयप्रभावोपबृंहितेन पाक-निःसारभवरौक्ष्येण मधुराम्ललवणा अपि वातकारिण इति । तदेतद्विस्तरेण चरके ग्रहणीचिकित्सितेऽभिहितम् । वास्तवस्तु द्रव्याणामेव पाकः, स च सम्यक् धातुरस-मलविवेकान्तलक्षण एव निष्ठापाक इत्यभिधीयते; विश्वामित्रेणापि भाक्त इति वदता रसपाकानामभाव एव सूच्यते, न पुनरुभयसंभव इति ॥ ११ ॥

**रक्तशालिस्त्रिदोषघ्नश्चक्षुष्यः शुक्रमूत्रलः ॥**
**तृष्णाघ्नो बलकृत् स्वर्यो हृद्यस्तदनु चापरे ॥ १२ ॥**

अपरशालिगुणानाह—तदित्यादि । अनुशब्दो हीनार्थः, तेन रक्तशालिमपेक्ष्य अपरे शालयः किंचिद्धीनगुणा इत्यर्थः । एतेन शेषशालीनामप्यतिदेशेन गुणा उक्ताः ॥ १२ ॥

**षष्टिको मधुरः शीतो लघुर्वृष्यस्त्रिदोषहा ॥**

यद्यपि षष्टिकादयो बहवो भवन्ति ग्रैष्मिकाः, तथापि तेषु मध्ये प्रधानस्य षष्टि-कस्य गुणमाह—षष्टिक इत्यादि । ननु, चरके "शीतः स्निग्धो गुरुः स्वादुः"—इत्य-नेन षष्टिकस्य गुरुत्वमुक्तमिह कथं लघुरिति पठ्यते । नैवम्, अत्र 'अगुरुः' इत्यकार-प्रश्लेषाल्लघुत्वमेवार्थः; अत एव मात्राशितीये लघुरित्युक्तम् ॥—

**मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ॥ १३ ॥**
**बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥**

व्रीहिसंज्ञकस्य शारदाशुकधान्यस्य गुणमाह—मधुर इत्यादि । पाटलो व्रीहि-विशेषः ॥ १३ ॥—

**धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु ॥ १४ ॥**

अनुक्तानां शारदग्रैष्मिकधान्यानां सामान्यगुणमाह—धान्यमित्यादि । ननु, शाल्या-दीनामुपयोगस्तण्डुलभक्तपेयादिप्रकारेण परं भवति, ते च तण्डुलादयः पृथगेव गुणतो निर्देष्टव्याः; अतस्तत्प्रकृतिगुणाभिधानं व्यर्थं, तद्विकृतिगुणेनैव कार्यकर-त्वात् । नैवं, द्रव्याणां हि प्रकृतिगुणसहिता एव विकृतिगुणाः कार्यकराः; यतस्तण्डु-लभक्तपेयादयो रक्तशाल्यादिप्रकृतिगुणानुगता एव; नहि रक्तशालिकृतभक्तपेयालाजा-दयो यथा लघ्वादिगुणाः, तथा व्रीहिकृतभक्तपेयालाजादयः, किंतु प्रकृतिगुणानुगत-रक्तशालिकृतभक्ताद्यपेक्षया गुरव एव; तेन यत्र प्रकृतिगुणसमानो विकृतिगुणस्तत्र गुणोत्कर्षः, यत्र प्रकृतिगुणविपरीतो विकृतिगुणस्तत्र गुणापकर्षः; यथा—व्रीहेर्गुरो-र्लघवो लाजाः, अत्र लाजकरणेनाल्पमेव लघुत्वं क्रियते; यत्र तु प्रकृतिगुणैर्न समानो नापि विपरीतो विकृतेर्गुणः यथा—दध्नोऽम्लत्वं, मण्डस्य दीपनत्वम्; तत्र द्वयोरपि प्रकृतिविकृतिगुणयोः पृथगेव कार्यकारित्वमुत्सर्गतः; क्वचित्तु यद्विकृतेर्बलीयस्त्वेन

प्रकृतिगुणाभिभावकत्वं, यथा—शुक्तासुतार्द्रककरीरादिषु, तत् "तद्वत् तदासुतं"—इति विशेषागमादेव प्रतीयते; तेन, तत्र प्रकृतिगुणानां दुर्बलत्वम्; यदपि प्रकृतिगुणोपमर्देन तद्विरुद्धकार्यकर्तृत्वं विकृतेः, यथा—कांस्यभाजने दशरात्रस्थितस्य सर्पिषो मारकत्वमित्यादि, तदप्यपवादरूपागमवेद्यमेव; तेन यत्रोत्सर्गभूतशास्त्रार्थापवादस्तत्रोपदेशं शास्त्रकारः करोत्येवेति प्रकृतिविकृत्योः पृथग्गुणाभिधानं युक्तमेव । अयं च न्याय एवंजातीयेषु मांसादिषु ज्ञेयः ॥ १४ ॥

**धान्यं सर्वं समातीतं पथ्यं लघ्वन्यथा नवम् ॥**
**ततः परं लघुतरं रूक्षं वातप्रकोपणम् ॥ १५ ॥**

इदानीं धान्यानां कालविशेषेण क्रियाविशेषेण च गुणविशेषमाह—धान्यमित्यादि । ततः परमिति वर्षद्वयात् परमित्यर्थः ॥ १५ ॥

**दग्धायामवनौ जाताः शालयो लघुपाकिनः ॥**
**कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः ॥ १६ ॥**

दग्धभूमिजातशालिगुणानाह—दग्धेत्यादि । लघुपाकिन इति शीघ्रपाकाः, अन्ये तु कटुपाकिन इत्याहुः ॥ १६ ॥

**स्थलजाः कफपित्तघ्नाः कषायाः कटुकानुगाः ॥**
**किंचित्सतिक्तमधुराः पवनानलवर्धनाः ॥ १७ ॥**

स्थलजशालिगुणानाह—स्थलजा इत्यादि । स्थलजा इति जाङ्गलभूमिसंभवाः । अत्र सतिक्तमधुरा इत्यत्र ईषदर्थेन सहशब्देन संबन्धात् किंचिदर्थे लब्धे किंचिदिति पदं पुनरुक्तमिति मन्यमानाः पवनानलवर्धना इत्यत्र योजयन्ति केचित् ॥ १७ ॥

**कैदारा मधुरा वृष्या बल्याः पित्तनिबर्हणाः ॥**
**ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ १८ ॥**

आनूपदेशजातशालिगुणानाह—कैदारा इत्यादि । कैदारा इत्यनूपदेशजाः, जलसमीपभूमिभागजाता इत्यर्थः ॥ १८ ॥

**रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ॥**
**अदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ॥ १९ ॥**

एकवारमुत्पाट्य येऽन्यत्र रोप्यन्ते ते रोप्याः, अतिरोप्यास्तु एकवारमुत्पाट्य रोपयित्वा पुनरुत्पाट्य रोपिताः; तेन वारद्वयं रोपिता इत्यर्थः । एतेन प्रथमं यत्रोप्तास्तत्रैव ये पच्यन्ते तदपेक्षया उत्खातरोपिता लघवः, ततोऽपि रोप्यातिरोप्या लघव इत्युपदर्शितम् । शीघ्रपाका इति शीघ्रं जठराग्निना पच्यन्ते । लघव इत्यनेन लघुपाकित्वमुक्तमिति केचित् ॥ १९ ॥

**शालयश्छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ॥**
**तिक्ताः कषायाः पित्तघ्ना लघुपाकाः कफापहाः ॥ २० ॥**

छिन्नरूढशालिगुणानाह—शालय इत्यादि। छिन्नरूढा इति प्रथमं छिन्नाः पश्चात् रूढाः। अत्र केचिच्चोदयन्ति–ननु च, 'दग्धायामवनौ जाता'–इत्यादिना उक्तशाल्यादीनां यदि पुनरुक्तगुणविरोधेन गुणान्तरोत्पत्तिरुच्यते, तदा पूर्वगुणवर्णनमनर्थकम्; तदविरोधेनेति चेत्? तदा पूर्वापरविरोधः, तथाहि–तेषां शालीनां स्निग्धत्वमुक्तं, दग्धावनिसंभूतानां तु तेषामेव रौक्ष्यमपीति। तन्न, उत्सर्गापवादभेदेनाविरोधात्; एतच्च पूर्वमुक्तमेव ॥ २० ॥

**गोधूमः स्थैर्यकृद्वृष्यः स्निग्धशीतः सरो गुरुः ॥**
**सन्धाता बृंहणो बल्यो जीवनो वातपित्तहा ॥ २१ ॥**

गोधूमगुणमाह–गोधूम इत्यादि। अत्र गोधूमस्य स्वादुशीतस्निग्धादिगुणयोगात् श्लेष्मकर्तृत्वं ज्ञेयं; अत एव सुश्रुते "श्लेष्मकर–" इत्युक्तम्। अन्ये तु "चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः"–इति (च. सू. स्था. अ. ६) वसन्ते गोधूमस्य विधानात् श्लेष्मकारित्वमस्यायुक्तमिति मन्यमानाः सुश्रुते 'श्लेष्मकर' इत्यस्य स्थाने 'शोफकर' इति पठन्ति। तत्तु न सम्यक्, गोधूमगुणपर्यालोचनया कफकर्तृत्वस्यैव युक्तत्वात्; वसन्तस्यादानमध्यत्वेन वातपित्तानुबन्धात् स्निग्धशीतस्यापि गोधूमस्य तत्रोपयोगोऽपि न विरुध्यते; किंवा गोधूमोऽत्र पुराणोऽभिहितः स च न कफकरः। यदुक्तम्,– "मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते। मुद्गाद्गोधूमतः क्षौद्रात् सिताया जाङ्गलामिषात्"—इति (वा. सू. स्था. अ. १०)। अत एव वसन्तचर्यायां वाग्भटेन,– "पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक्"—(वा. सू. स्था. अ. ३) इत्युक्तम्। अन्ये तु आदानमध्यत्वेन यथा चन्दनागुरुभ्यां मिलित्वानुलेपः तथा यवगोधूमयोर्यथायथं वातपित्तप्रत्यनीकत्वान्मिलितयोरेवोपयोग इत्याहुः ॥ २१ ॥

**यवः स्वादुः कषायश्च कफपित्तहरो हिमः ॥**
**व्रणेषु सर्वदा पथ्यस्तिलवत् पाकतः कटुः ॥ २२ ॥**
**बहुवातपुरीषश्च मेदोवाततृषापहः ॥**
**वृष्यो बल्यो बद्धमूत्रस्थैर्याग्निस्वरवर्णकृत् ॥ २३ ॥**

यवगुणानाह—यव इत्यादि। कषायश्चेति चकारेण मधुरत्वापेक्षया कषायस्य हीनतां बोधयति; अत एव चरके "सकषायश्च"–इति उपसर्जनार्थः सहशब्दः प्रयुक्तः। व्रणेषु सर्वदा पथ्यस्तिलवदिति तिलो यथा व्रणलेपे वातपित्तकफेषु शस्यते तथा यवोऽपि सर्वदा इति; अनेन व्रणस्य सर्वास्वेव अवस्थासु यवस्य हितत्वं बोधयति। तदुक्तम्,–"तिलवद्यवकल्कं तु केचिदाहुर्मनीषिणः। अविदग्धं तु शमयेद्विदग्धं पा-

चयत्यपि ॥ पक्कं भिनत्ति भिन्नं च शोधयेद्रोपयेदपि"–इति । अन्ये तु सर्वदा इत्यनेन व्रणे यवमण्डप्रयोगेणापि हितमिच्छन्ति; अत एव सुश्रुते हिताहितीये व्रणहितवर्गे यवः पठितः । पाकतः कटुरिति इह केचिदाचक्षते–कटुपाकित्वेन लघुत्वमुक्तं, नच चरके "रूक्षः शीतो गुरुः"–इत्यनेन विरोधः, तत्रापि अकारप्रश्लेषेण 'अगुरुः' इति पाठाङ्गीकारात्; गुरुत्वप्रतिज्ञानार्थमीषदर्थे नञं प्रश्लेषयन्ति, अत एव 'लघुः' इत्यसन्दिग्धमपि न पठितम्; तथापि एतदर्थमेवासन्दिग्धार्थमेव असन्दिग्धमपि 'लघुपाक' इति न कृतम्; अन्ये तु चरकोक्तगुरुगुणस्यापि यवस्य कटुविपाकित्वं द्रव्यप्रभावादेव समर्थनीयमित्याहुः । बहुवात इति कुक्षौ वातकर्तृत्वेन ज्ञेयं, तेन 'मेदोवाततृषापह' इत्यनेनोक्तवातहन्तृत्वं न विरुध्यते; किंवा मेदसावृतो वातो मेदोवातः, तेन मेदसावृत एव वायौ यवो हितः अनावृते तु रूक्षकषायशीतकटुपाकतया कारणभूत एव । बल्यत्वं च स्रोतोविशुद्धिकरत्वेन सम्यक् रससंचारेणेष्टं; नतु देहस्योपचयकारकत्वेन, रौक्ष्यादिधर्मयोगाद्यवस्य । अत एव सुश्रुते "स्थूलविलेखनः"–इत्युक्तम् । बद्धमूत्रोऽल्पमूत्रः, एतेन प्रमेहिणां हित इति डल्हणो व्याचष्टे ॥ २२ ॥ २३ ॥

**श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ॥**
**तद्वच्च कङ्गुनीवारकोरदूषाः प्रकीर्तिताः ॥ २४ ॥**

तृणधान्यानां गुणमाह—श्यामाक इत्यादि । कङ्गुः 'काङ्गनि' इति लोके । नीवार 'उडी' इति लोके । कोरदूषः कोद्रवः ॥ २४ ॥

**मुद्गः कषायो मधुरः कफपित्तास्रजिल्लघुः ॥**
**ग्राही शीतः कटुः पाके चक्षुष्यो नातिवातलः ॥ २५ ॥**
**प्रधाना हरितास्तत्र वन्या मुद्गसमाः स्मृताः ॥**
**मसूरो मधुरः शीतः संग्राही कफपित्तहा ॥ २६ ॥**

शूकधान्यमनु तदुपकरणत्वेन शमीधान्यं वाच्यं, तत्रापि प्राधान्यात् मुद्गगुणं प्रागभिधत्ते–मुद्ग इत्यादि । मधुर इति रसतः पाकतश्च । सुश्रुतेऽप्युक्तम्,—"विपाके मधुराः"–इति । विपाके मधुराणामप्येषां बद्धवर्चस्त्वं प्रभावात् । "ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारकाः"—( सु· सू· स्था· अ· ४६ ) एतच्च स्वजात्युत्कर्षपरं वचनं, न पुनः सर्वथैवाध्माननिषेधपरमित्याहुः ॥ २५ ॥ २६ ॥

**माषो बहुमलो वृष्यः स्निग्धोष्णमधुरो गुरुः ॥**
**वातनुत् बृंहणो बल्यो मेदोमांसकफप्रदः ॥ २७ ॥**

माषगुणमाह—माष इत्यादि । अत्र वृष्य इत्यनेन शुक्रस्रुतिकरत्वं शुक्रवृद्धिकरत्वं चेति द्विविधमेव वृष्यत्वं विवक्षितम्; अत एवोक्तं वाग्भटेन,—"शुक्रवृद्धिविरेककृत्"—

इति; सुश्रुतेऽपि "वृष्यः"—इत्युक्त्वा पुनः शुक्रावहत्वमुक्तमेतदुभयरूपवृष्यत्वपरिग्रहार्थम् ॥ २७ ॥

**राजमाषः सरो रुच्यः कफशुक्राम्लपित्तनुत् ॥**
**तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः ॥ २८ ॥**

राजमाषगुणमाह—राजमाष इत्यादि । सरः इति जलक्षिप्ततैलवदाशयं व्याप्नोतीति सरः, सरत्वं हि स्थिरविपरीतगुणः, अयं च गुणो जलबहुलस्यैव द्रव्यस्य भवति; तदुक्तं,—"शीतस्निग्धमृदुस्तिमितसरपिच्छिलमाप्यम्"—इति । तत्स्वादुरिति तयोः रसपाकयोः स्वादुः । उक्तं हि सुश्रुते,—"कषायभावान्न पुरीषभेदी न मूत्रलो नैव कफस्य कर्ता । स्वादुर्विपाके मधुरोऽलसान्त्रः संतर्पणः स्तन्यरुचिप्रदश्च"—इति ( सु. सू. स्था. अ. ४६ ) । अलसान्त्रो राजमाष इति चक्रादयः । अस्य च विपाके मधुरस्यापि प्रभावादेव बद्धविण्मूत्रत्वं कफहारित्वमवृष्यत्वं चेति गयदासः । अन्ये तु तत्स्वादुरिति माषवत् स्वादुरित्याहुः । ये तु सर इत्यस्य वर्चोभेदार्थत्वं वर्णयन्ति तन्मते सुश्रुतविरोधोऽपरिहार्यः ॥ २८ ॥

**चणको वातलः शीतः कफास्रक्पित्तपुंस्त्वनुत् ॥**
**सतीना वातला रक्तपित्तघ्ना बद्धवर्चसः ॥ २९ ॥**

वर्तुलकलायगुणमाह—सतीन इत्यादि । सतीनो वर्तुलकलायः । भिन्नवर्चस इत्यपपाठः, "हरेणवः सतीनाश्च विज्ञेया बद्धवर्चसः"—इति सुश्रुतपाठात्; द्रव्यगुणपर्यालोचनया बद्धवर्चस्त्वस्यैव युक्तत्वात् ॥ २९ ॥

**तुवरी कफपित्तघ्नी**

आढकीगुणानाह—तुवरीत्यादि । तुवरी तोरीति लोके ॥—

**कलायश्चातिवातलः ॥**

कलायगुणानाह—कलाय इत्यादि । कलायस्त्रिपुटकलायः, तेउडीति लोके, वर्तुलस्य पूर्वोक्तत्वात् । चकारात् कलायोऽपि कफपित्तघ्नः । तदुक्तं चरके,—"चणकाश्च मसूराश्च खण्डीकाः सहरेणवः । पित्तश्लेष्मणि शस्यन्ते"—इति । अत्र खण्डीकस्त्रिपुटकलायः । वातल इति तुवरीत्यनेनापि संबध्यते । यदुक्तं चरके,—"आढकी कफपित्तघ्नी वातला"—इति ( च. सू. स्था. अ. २७ ) ॥—

**मुकुष्ठः शीतलो ग्राही कफपित्तज्वरापहः ॥ ३० ॥**

मुकुष्ठकगुणानाह—मुकुष्ठ इत्यादि । मुकुष्ठः मोठ इति ख्यातः । अस्य च क्रिमिकर्तृत्वं सुश्रुतेनोक्तम् ॥ ३० ॥

**कुलत्थः कफवातघ्नो ग्राह्युष्णस्तुवरः कटुः ॥**
**शुक्राश्मरीगुल्मकासश्वासानाहान् सपीनसान् ॥ ३१ ॥**
**हन्त्यर्शोमेदसी हिक्कां रक्तपित्तकरश्च सः ॥**

कुलत्थगुणानाह—कुलत्थ इत्यादि । कफवातघ्न इति कफघ्नो, वातघ्नः, संयुक्तकफवातघ्नश्च; तेषु तेषु प्रदेशेषु प्रत्येकं वाते कफे च तथा संयुक्तयोश्च कफवातयोर्हितत्वेन कुलत्थस्योद्दिष्टत्वादिति गयदासः । तुवर इति कषायः । कटुरिति सुश्रुतमते विपाके कटुरित्यर्थः । उक्तं च,—"उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः"—इति । चरकमते त्वम्लपाकः । तदुक्तं,—"उष्णाः कषायाः पाकेऽम्ला"—इति । उभयथापि रक्तपित्तकरत्वमिति द्रव्यगुणे न विरोध इति प्रागेवोक्तम् ॥ ३१ ॥—

**वन्यः कुलत्थस्तद्वच्च विशेषान्नेत्ररोगनुत् ॥ ३२ ॥**

वन्यकुलत्थगुणमाह—वन्य इत्यादि । तद्वदिति गुणैः कुलत्थसदृशः ॥ ३२ ॥

**काकाण्डोमात्मगुप्तानां माषवत् फलमादिशेत् ॥**

शूकशिम्बासदृशशिम्बिः काकाण्डः शूकरशिम्बीतिलोके । उमा अतसी । आत्मगुप्ता शूकशिम्बिः । अन्येतु "फलानि माषवद्विद्यात् काकाण्डोमात्मगुप्तयोः—" इति वाग्भटे द्विवचनं दृष्ट्वा काकाण्डोमा कटभीति व्याचक्षते ॥—

**ईषत्कषायो मधुरः सतिक्तः संग्राहकः पित्तकरस्तथोष्णः ॥**
**तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपन एव पथ्यः॥३३॥**
**दन्त्योऽग्निमेधाजननोऽल्पमूत्रस्त्वच्योऽतिकेश्योऽनिलहा गुरुश्च॥**

तिलगुणानाह—ईषदित्यादि । व्रणालेपन एव पथ्य इत्येवकारेण व्रणे तिलानामालेपने पथ्यत्वमभ्यवहारे पुनरपथ्यत्वमेव बोधयति, अत एव व्रणविरुद्धवर्गे नवधान्यादौ तिलः पठितः; सेयं स्वभावोपजनितैवाधारशक्तिरस्य, यदुक्तं सुश्रुते,—"यत्र कुर्वन्ति तदधिकरणम्"—इति, धान्याम्लस्य बहिरन्तःप्रयोगे दाहहरणकरणत्ववदिति । येऽपि "स्निग्धो व्रणे सर्वत एव पथ्य"—इति पठन्ति तन्मतेऽपि बहिरालेपनेनैव सर्वत्र वातकृते पित्तकृते कफकृते च पथ्य इति ज्ञेयम् । यद्वक्ष्यति,—"माधुर्याच्च तथैवौष्ण्यात् स्नेहाच्चानिलनाशनः । कषायभावान्माधुर्यात्तिक्तत्वाच्चापि पित्तनुत् ॥ औष्ण्यात् कषायभावाच्च तिक्तत्वाच्च कफे हितः"—इति । ननु, मधुरपाकित्वादेव तिलस्य गुरुत्वं सिद्धं तत् किं "तिलो विपाके मधुरो गुरुश्च"—इति । सत्यं, एतदेव हि विपाकमधुरस्य तिलस्य गुरुत्ववचनं मधुरपाकस्यापि क्वचिद्गुरुत्वं व्यभिचरतीति बोधयति । तेन रक्तशाल्यादीनां मधुरपाकित्वेऽपि लघुत्वं प्राभाविकं सिद्धं भवतीति गुरुत्वं हि मधुरपाकित्वे अतिदिष्टं, न तु स्वभावभूतम् । तेन गुरुत्वस्यातिदेशिकत्वेन तद्व्यभि-

चारोऽपि न दोषायेति । अत्र केचित्—ननु, यथा विपाकानां मधुरादीनां मधुरादिरसेष्विव गुरुत्वलघुत्वे अतिदिश्येते एवं वीर्येऽप्युष्णादयो गुणा आतिदेशिकाः सम्प्रज्येरन्, अतस्तत्रापि व्यभिचारः कथं न स्यात्? नैवं, वीर्यस्य उष्णादयः स्वभावभूता न पुनरातिदेशिकाः, उपाध्यन्तराभावात्; रसेषु हि मधुराम्ललवणतिक्तादय एव उपाधयः सन्ति, तथैव पाकानामपि मधुरकट्वम्लरूपा एवोपाधयः; तेन तत्र लघुत्वादयोऽतिदेष्टुं युज्यन्ते न पुनर्वीर्येषूष्णादयः, येनोष्णादय एव गुणा वीर्याणि, नहि तस्मिन्नेव स्वभावे स एव स्वभावोऽतिदिश्यते; अत एव न व्यभिचारी, स्वयमेव तत्स्वभावत्वात्, तदभावे च तस्याभावाच्चेति । भवति चात्र,—"उपाध्यन्तरसद्भावात् पाकानां गुरुलाघवम् । अतिदिष्टमतस्तत्र व्यभिचारोऽपि संभवी ॥ शीतोष्णादिस्वभावस्य वीर्यस्यान्योऽस्ति नोपधिः । व्यतिरेको न शीतादेस्तदन्यः कोऽपि नान्वयि"—इत्याहुः । तिलानां त्वच्यत्वं केश्यत्वं चाधिकरणशक्त्या । तदुक्तं,—"यत्र कुर्वन्ति तदधिकरणम्"—इति (सु. सू. स्था. अ. ४१) ॥ ३३ ॥—

**तिलेषु सर्वेष्वसितः प्रधानो**
**मध्यः सितो हीनतरास्तथान्ये ॥ ३४ ॥**

अत्र तिलानां वर्णभेदेनानेकविधत्वं तत्र कस्यचित् प्राधान्यं कस्यचित् मध्यत्वमित्यादि दर्शयन्नाह—तिलेष्विति । अन्य इति पीतलोहितहरिता इत्यर्थः ॥ ३४ ॥

**शिम्बास्तु विविधा रूक्षा बलघ्नाः स्वादुशीतलाः ॥**
**विदाहिनोऽग्निशमना विज्ञेयाः कफनाशनाः ॥**
**शुक्रदृष्टिक्षयकराः कटुपाकाः प्रमाथिनः ॥ ३५ ॥**

शिम्बीधान्यमध्य एव शिम्बित्वसामान्यात् शिम्बानामपि सामान्यगुणकर्म निर्दिशन्नाह—शिम्बा इत्यादि । स्वादुशीतला इति स्वादवः शीतलाश्चेति । कफनाशना इत्यनेन वातपित्तकर्तृत्वं सूचयति । तदुक्तं सुश्रुते,—"रूक्षः कषायो विषशोफशुक्रबलासदृष्टिक्षयकृद्विदाही । कटुर्विपाके मधुरश्च शिम्बः प्रभिन्नविण्मारुतपित्तलश्च"—इति (सु. सू. स्था. अ. ४६) । प्रमाथिन इति भिन्नवर्चसः ॥ ३५ ॥

**सितासिताः पीतकरक्तवर्णा**
**भवन्ति येऽनेकविधास्तु शिम्बाः ॥**
**यथादितस्ते गुणतः प्रधाना**
**ज्ञेयास्तथोष्णा रसपाकयोश्च ॥ ३६ ॥**

वर्णविशेषेण शिम्बानां गुणविशेषमाह—सितासिता इत्यादि । यथादित इति पदार्थानतिवृत्तौ वीप्सायामव्ययीभावः, तेनाद्यानतिक्रमेण, आदौ आदाविति वा अर्थः । गुणत

इति रसवीर्यविपाकगुणैः, तेनासितात् कृष्णात् सितो गुणतः प्रधानं, पीतादसितः, रक्तादपि पीतः श्रेष्ठ इत्यर्थः । ज्ञेयास्तथोष्णा रसपाकयोश्चेति यथादित एव वीर्येणोष्णा रसपाकयोश्च प्रधाना इत्यर्थः । अन्ये तु यथोदितास्ते गुणतस्तथार्द्रा इति पठन्ति । अत्रायमर्थः—ये शिम्बा येन प्रकारेण रसपाकयोरुदितास्ते तथैवार्द्रा ज्ञेया नतु शुष्काः ॥ ३६ ॥

**सहाद्वयं मूलकजाश्च शिम्बाः**
**कुशिम्बिवल्लीप्रभवाश्च शिम्बाः ॥**
**ज्ञेया विपाके मधुरा रसे च**
**बलप्रदाः पित्तनिबर्हणाश्च ॥ ३७ ॥**

शिम्बानामेव जातिविशेषेण गुणकर्मविशेषं दर्शयन्नाह—सहाद्वयमित्यादि । सहाद्वयं मुद्गपर्णी माषपर्णी च; तयोः प्रकरणात् शिम्बा एव । मूलकजाश्च शिम्बा इति मूलकशिम्बाः । अन्ये तु मूलकपर्णीजाश्चेति पठन्ति, अत्र मूलकपर्णी शोभाञ्जनः; युक्तं चैतत्, मूलकशिम्बस्य कटूष्णत्वेन वातकफहन्तृत्वस्यैव युक्तत्वादिति गयदासः । कुशिम्बिर्मुस्तकशिम्बिः । वल्लीप्रभवा इति अल्पवल्लीप्रभवाः । अन्ये तु कुशिम्बिवल्ली ग्राम्यशिम्बिवल्लीत्याहुः ॥ ३७ ॥

**विदाहवन्तश्च भृशं विरूक्षा**
**विष्टभ्य जीर्यन्त्यनिलप्रदाश्च ॥**
**रुचिप्रदाश्चैव सुदुर्जराश्च**
**सर्वे स्मृता वैदलिकाश्च शिम्बाः ॥ ३८ ॥**

इदानीं मुद्गादीनामामावस्थायां ये शिम्बास्तेषां गुणमाह—विदाहवन्त इत्यादि । विष्टभ्य जीर्यन्त्यनिलप्रदाश्चेति सवाततोदशूलामल्पमलां प्रवृत्तिं कृत्वा चिरेण पच्यन्त इत्यर्थः । चक्रस्तु अनिलप्रदा इत्यन्तो गुणः पूर्वोक्तसहाद्वयादीनां, रुचिप्रदा इत्यादिगुणस्तु वैदलिकानामार्द्रशिम्बानामित्याह । वैदलिका इति विदलयोग्यतामात्रेण ग्रहणं, तेन माषादीनां ग्रहणं तिलादीनां च निरास इति ॥ ३८ ॥

**षष्टिका यवगोधूमा लोहिता ये च शालयः ॥**
**मुद्गाढकीमसूराश्च धान्येषु प्रवराः स्मृताः ॥ ३९ ॥**

इदानीं शूकधान्यशमीधान्येषु ये श्रेष्ठास्तानाह—षष्टिका इत्यादि ॥ ३९ ॥

**कफवातहरस्तीक्ष्णः सिद्धार्थो रक्तपित्तकृत् ॥**
**स्निग्धोष्णः कृमिकुष्ठघ्नः कटुको रसपाकतः ॥ ४० ॥**

शिम्बिप्रकरणानुरोधात् सिद्धार्थकानां च गुणानत्रैवाह—कफेत्यादि । सिद्धार्थः श्वेतसर्षपः ॥ ४० ॥

तद्गुणा राजिका वाच्यास्तद्गुणोऽन्योऽपि सर्षपः ॥
रसे पाके च कटुकः कुसुम्भः कफनाशनः ॥ ४१ ॥
अनार्तवं व्याधिहतमपर्यागतमेव च ॥
अभूमिजं नवं चापि न धान्यं गुणवत् स्मृतम् ॥ ४२ ॥

इदानीं धान्यानां हेयत्वनिमित्तं दोषं दर्शयन्नाह—अनार्तवमित्यादि । अनार्तवमिति अन्यर्तुभवम् । व्याधिहतमिति धान्यस्य ये रोगाः कुङ्कुमिकादयस्ते च कृषीवलसंप्रदायप्रसिद्धाः तैर्हतमभिभूतम् । अपर्यागतमपक्वम् । अभूमिजमिति उषरोपत्यकादिसविषभूमिजम् । नवं चापीति चकारेण अनतिदोषता नवस्य सूच्यते ॥ ४१ ॥ ४२ ॥

यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः ॥
पुराणा नीरसा रूक्षा न तथार्थकरा मताः ॥
विदाहि गुरु विष्टम्भि विरूढं दृष्टिदूषणम् ॥ ४३ ॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे धान्यवर्गो नाम प्रथमो वर्गः समाप्तः ।

नवधान्यस्य यद्दोषवत्त्वमुक्तं तस्यापवादमाह—यवेत्यादि । विरूढमित्यङ्कुरितम् । अन्ये तु विगताङ्कुरजननशक्तिकमित्याहुः ॥ ४३ ॥

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणटीकायां धान्यवर्गो नाम प्रथमो वर्गः समाप्तः ।

---

सर्वं वातहरं मांसं वृष्यं बल्यं स्मृतं गुरु ॥
प्रीणनं बृंहणं हृद्यं मधुरं रसपाकयोः ॥ १ ॥

अन्नार्थं धान्यवर्गमभिधाय तदुपकरणव्यञ्जनार्थं मांसवर्गो वक्तव्यः, तत्र मांसानां सामान्यगुणमाह—सर्वमित्यादि ॥ १ ॥

हरिणः शीतलो बद्धविण्मूत्रो दीपनो लघुः ॥
मधुरो मधुरः पाके सुगन्धिर्दोषनाशनः ॥ २ ॥

हरिणमांसगुणानाह—हरिण इत्यादि । हरिणस्य मधुरपाकित्वेऽपि बद्धविण्मूत्रत्वं प्रभावाद्रक्तशालिवदिति चक्रः । दोषनाशन इति दोषशब्दोऽत्र दोषसामान्याद्दोषत्रयमेवाभिधत्ते, अत एव 'सन्निपातहा'—इति अन्ये पठन्ति ॥ २ ॥

**कषायो मधुरो हृद्यः पित्तासृक्कफवातहा ॥**
**संग्राही रोचनो बल्यस्तेषामेणो ज्वरापहः ॥ ३ ॥**

एणमांसगुणानाह—तेषामित्यादि । तेषामिति जङ्गालमृगाणां मध्ये एण इति कृष्ण-हरिणः, पूर्वं तु ताम्रवर्णहरिणस्य गुण उक्तः । उक्तं च सुश्रुते,—"एणः कृष्णस्तयोर्ज्ञेयो हरिणस्ताम्र उच्यते"—इति ( सु॰ सू॰ स्था॰ अ॰ ४६ ) ॥ ३ ॥

**शशः स्वादुः कषायश्च लघुः पित्तकफापहः ॥**
**नातिशीतलवीर्यत्वाद्वातसाधारणो मतः ॥ ४ ॥**

शशमांसगुणानाह—शश इत्यादि । वातसाधारण इति वातस्य चयं शमं च न करोतीत्यर्थः । अत एव चरके,—"शशः स्वादुः प्रशस्तश्च सन्निपातेऽनिलावरे"—( च. सू. स्था. अ. २७ ) इत्युक्तम् ॥ ४ ॥

**नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ॥**
**शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ॥ ५ ॥**

अजमांसगुणानाह—नातिशीतमित्यादि । अदोषलमिति यद्यपि सुश्रुतेन—"अतिशीतो गुरुः स्निग्धो मन्दपित्तकफः स्मृतः । छागलस्त्वनभिष्यन्दी तेषां पीनसनाशनः"—इत्युक्तं, तथापि अव्यपदेश्यपित्तकफजनकत्वाददोषलमित्युक्तम् । यत्तु हारीते "त्रिदोषनुद्देहधातुसामान्याच्छागलं लघु"—इत्युक्तं, तदपि ग्राम्यत्वेन प्रभूतकफजननयोग्यस्यापि छागलस्य तदजनकत्वात् समाधेयम्; यथा मधुरस्य दाडिमस्य मधुरद्रव्यान्तरवत् कफाजनकत्वेन त्रिदोषहरत्वम्, यथा वा—सहकारतैलस्य रूक्षत्वं स्वजातीयापेक्षया यथाविधस्नेहनाकर्तृत्वात्, यथा वा—'चतुर्भागावशिष्टं तु तोयं कफहरं स्मृतम्"—( सु. सू. स्था. अ. ४५ ) इत्यत्र कफं प्रति इतरपानीयवदजनकत्वेन कफहरत्वमुच्यते; एवमन्यत्रापि एवंजातीये प्रतुदविष्किररसमज्ञादौ श्लेष्महरत्वादि व्याख्येयम् । शरीरधातुसामान्यादिति मनुष्यमांसस्यापि नातिशीतगुरुस्निग्धत्वादित्यर्थः; अयं च बृंहणत्वे हेतुः; एतेन यद्यपि मांसान्तरमपि मांसत्वेन शरीरमांसतुल्यं, तथापि तत्र गुणसामान्याभावादाजमांसवन्न सर्वरूपेण बृंहणमित्यर्थः । एतेन, भङ्ग्या नृमांसस्यापि गुणा आचार्येण उक्ता इत्येवावधेयम् । अन्ये तु शरीरधातुसामान्यादिति अनभिष्यन्दित्वे हेतुमाहुः, तन्न, अप्रयोजकत्वात् । स्वमते तु ग्राम्यस्य बृंहणस्याप्याजमांसस्यानभिष्यन्दित्वं प्रभावादेव मन्तव्यम्, यदेव हि द्रव्यगुणद्वारा नोपपद्यते तत्रैव प्रभावकल्पनस्यैवौचित्यात् ॥ ५ ॥

**मेषस्य मधुरं मांसं पित्तश्लेष्महरं गुरु ॥**

मेषगुणमाह—मेषस्येत्यादि । अत्र क्वचित् पुस्तके 'पित्तश्लेष्मकरम्'—इति पाठो दृश्यते, स च प्रमादपाठ एव; यतः शरद्धितौ उरभ्राणामुपयोग उक्तः, यदुक्तम्,—"उरभ्रान् शरभान् शशान्"—इति; नच पित्तश्लेष्मकरत्वे मेषस्य तत्रोपयोगो युज्यते ।

अत एव चक्रेणापि "मांसं मधुरशीतत्वाद्गुरु बृंहणमाविकम्"—इति चरकवचनेनाविकमांसस्य मधुरशीतत्वेन पित्तहरत्वं बोध्यमिति व्याख्यातम्। यत्तु रक्तपित्तनिदाने चरकेण "वराहमहिषाविक"—इत्यादिना आविकस्य रक्तपित्तनिदानत्वमुक्तं तदपि द्रव्यान्तरसंयुक्तस्याप्याविकमांसस्य न तु केवलस्येत्यवधेयम्; अत एव सुश्रुतेऽपि,—"बृंहणं मांसमौरभ्रं पित्तश्लेष्मापहं गुरु"—(सु. सू. स्था. अ. ४६) इत्युक्तम्; वाप्यचन्द्रस्तु "पित्तश्लेष्मावहम्"—इति पठति व्याचष्टे च—यद्यप्यौरभ्रमांसं पित्तश्लेष्मकरमत्रोक्तं तथापि सातिशयं पित्तं श्लेष्माणं च न करोतीति, तदप्यनादरणीयमुक्तयुक्तेरेव ॥—

**मेदःपुच्छोद्भवं वृष्यमौरभ्रसदृशं गुणैः ॥ ६ ॥**

मेदःपुच्छमांसगुणानाह—मेदःपुच्छोद्भवमित्यादि । मेदःपुच्छो मेषभेदः, स च पुच्छदेशे लम्बमानमांसपिण्डः ॥ ६ ॥

**माहिषं तर्पणं वृष्यं स्निग्धोष्णमधुरं गुरु ॥**
**निद्रापुंस्त्वबलस्तन्यवर्धनं मांसदार्ढ्यकृत् ॥ ७ ॥**

माहिषमांसगुणानाह—माहिषमित्यादि । अत्र वृष्यं तथा पुंस्त्ववर्धनमिति च द्वयमुक्तं तेन माषवदुभयरूपवृष्यप्राप्तिरिति बोध्यम् ॥ ७ ॥

**शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥**
**कार्श्यं केवलवातांश्च गोमांसं संनियच्छति ॥ ८ ॥**
**हयमांसं बलकरमुष्णं मारुतनाशनम् ॥**
**गवयस्यापि मांसं तु स्निग्धं कासनिबर्हणम् ॥ ९ ॥**
**रसे पाके च मधुरं व्यवायस्य तु वर्धनम् ॥**
**खड्गिमांसं कफघ्नं तु कषायमनिलापहम् ॥ १० ॥**
**पित्र्यं पवित्रमायुष्यं बद्धमूत्रविरूक्षणम् ॥**
**वराहपिशितं बल्यं रोचनं स्वेदनं गुरु ॥**
**स्नेहनं बृंहणं वृष्यं श्रमघ्नमनिलापहम् ॥ ११ ॥**

खड्गिमांसगुणानाह—खड्गीत्यादि । पित्र्यमिति एतद्गुणकथनं च यद्यपि चिकित्सायां नोपयुज्यते तथापि प्रसङ्गादुक्तम् ॥ ८–११ ॥—

**लावो लघुकटुर्ग्राही स्वादुः शीतस्त्रिदोषनुत् ॥**

पक्षिगुणानाह—लाव इत्यादि । कटुरिति कटुपाकः, तदुक्तं सुश्रुते,—"लावकः कटुपाकश्च"—इति । लघुरिति प्रकृतिलघुः, कटुपाक इत्यनेन च विपाकलघुत्वमिति चक्रः ॥—

**तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः ॥ १२ ॥**
**ईषद्गुरूष्णमधुरो वृष्यो मेधाग्निवर्धनः ॥**

तित्तिरिगुणानाह—तित्तिरिरित्यादि । सर्वदोषघ्न इति सर्वग्रहणं रक्तोपलक्षितदोषग्रहणार्थमित्याहुः । अन्ये तु—"तित्तिरिः संजयेत् शीघ्रं त्रीन् दोषाननिलोल्वणान्"—(च. सू. स्था. अ. २७) इतिवचनात् ग्रन्थाधिक्यात् वाताधिक्यदोषत्रयग्राप्त्यर्थं सर्वग्रहणमाहुः ॥ १२ ॥—

**पित्तश्लेष्मविकारेषु सरक्तेषु कपिञ्जलाः ॥ १३ ॥**
**मन्दवातेषु शस्यन्ते शैत्यमाधुर्यलाघवात् ॥**

कपिञ्जलगुणानाह—पित्तेत्यादि । कपिञ्जलो गौरतित्तिरिः, एतेन पूर्वोक्ततित्तिरिशब्दस्य गोबलीवर्दन्यायात् कृष्णतित्तिरिपरत्वमित्याहुः ॥ १३ ॥—

**ईषदुष्णा गुरुस्निग्धा बृंहणा वर्तकाः स्मृताः ॥ १४ ॥**
**क्रकरा लघवो हृद्यास्तथा चैवोपचक्रकाः ॥**
**वातपित्तहरा बल्या मेधाग्निबलवर्धनाः ॥ १५ ॥**

क्रकरोपचक्रकयोर्गुणानाह—क्रकरा इत्यादि । क्रकरः प्रसिद्धो लावसदृशः कपिञ्जलात् स्थूलः । उपचक्रकः क्रकरभेदः, "कृष्णचक्षुर्मदाविल"—इति डल्हणः, "चकोरभेद" इति तु त्रिविक्रमः ॥ १४ ॥ १५ ॥

**बर्हो दृक्श्रोत्रमेधाग्निवयोवर्णस्वरायुषाम् ॥**
**हितो बल्यो गुरुश्चोष्णो वातघ्नो मांसशुक्रलः ॥ १६ ॥**
**पारावतो गुरुः शीतो रक्तपित्तहरः स्मृतः ॥**
**रसे पाके च मधुरः कषायो विशदोऽपि च ॥ १७ ॥**

पारावतगुणानाह—पारावत इत्यादि । पारावत इति गृहवासी पारावतः, वनवासिकपोतस्य वक्ष्यमाणत्वात् ॥ १६ ॥ १७ ॥

**तेभ्यो लघुतराः किंचित् कपोता वनवासिनः ॥**
**शीताः संग्राहिणश्चैव स्वल्पमूत्रकराश्च ते ॥ १८ ॥**

वनवासिपारावतगुणानाह—तेभ्य इत्यादि । वनवासिनः कपोता इति वनवासिपारावता इत्यर्थः; नतु वनवासिपाण्डुकपोताः, तेषां काणकपोतत्वेन अपथ्यतमत्वादित्याहुः ॥ १८ ॥

**कषायः स्वादुलवणो गुरुः काणकपोतकः ॥**

काणकपोतमांसगुणानाह—कषाय इत्यादि । काणकपोतो वनवासिपाण्डुकपोत इति

गयदासः । अत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः, तेन त्रिदोषकरत्वं मलदूषकत्वं चास्य समुच्चीयत इत्याहुः ॥—

कुक्कुटो बृंहणो वन्यः स्वेदस्वरबलावहः ॥ १९ ॥
स्निग्धोष्णोऽनिलहा वृष्यो ग्राम्यस्तद्वद्गुरुस्तु सः ॥

कुक्कुटमांसगुणानाह—कुक्कुट इत्यादि । वन्य इति वनभवः । तद्वदिति वनकुक्कुटवत् । गुरुस्तु स इति विशेषेण ग्राम्यकुक्कुटो गुरुः, तेन वनकुक्कुटस्यापि किंचिद्गुरुत्वं सिद्धम्, अतएव—"गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः"—(च· चि· स्था· अ· ३) इति सामान्येन गुरूष्णत्वादिहेतूपन्यासो न विरुध्यत इत्याहुः ॥१९॥—

कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्धनः ॥ २० ॥
संनिपातहरो वेश्मकुलिङ्गस्त्वतिशुक्रलः ॥
शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् ॥ २१ ॥
शोषकासक्षयहितं संग्राहि लघु दीपनम् ॥

कुलिङ्गमांसगुणानाह—कुलिङ्ग इत्यादि । कुलिङ्गो वनचटको ग्राम्यचटकाकारः पीतमस्तकः, 'वाऐ' इति लोके । गृहकुलिङ्गो गृहवासिचटक एव ॥ २० ॥ २१ ॥—

गुरूष्णस्निग्धमधुराः स्वरवर्णबलप्रदाः ॥ २२ ॥
बृंहणाः शुक्रलाश्चोक्ता हंसाः पवननाशनाः ॥
शरारिबककादम्बबलाकाः पवनापहाः ॥ २३ ॥
स्निग्धाः सृष्टमला वृष्या रक्तपित्तहरा हिमाः ॥
कूर्मादयः स्वादुपाकरसा बल्यानिलापहाः ॥ २४ ॥
शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्धनाः
कृष्णः कर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः ॥२५॥
शुक्रसन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा ॥

शरार्यादिमांसगुणानाह—शरारीत्यादि । शरारिः शरालिरिति लोके प्रसिद्धः । बकः स्वनामख्यातः । कादम्बो नीलवर्णः कलहंस इत्युच्यते । बलाका बकभेद एव ॥ २२–२५ ॥—

गोधा विपाके मधुरा कषायकटुका रसे ॥ २६ ॥
वातपित्तप्रशमनी बृंहणी बलवर्धिनी ॥

बिलेशयानां गुणमाह—गोधेत्यादि ॥ २६ ॥—

**शल्यकः स्वादुपित्तघ्नो लघुशीतो विषापहः ॥ २७ ॥**
**मूषिको मधुरः स्निग्धो व्यवायी शुक्रवर्धनः ॥**
**दुर्नामानिलदोषघ्नाः क्रिमिदूषीविषापहाः ॥ २८ ॥**
**चक्षुष्या मधुराः पाके सर्पा मेधाग्निवर्धनाः ॥**

मूषिकमांसगुणानाह—मूषिक इत्यादि । व्यवायी अखिलं देहं व्याप्य गच्छति पाकम् । उक्तं च,—"व्यवायी देहमखिलं व्याप्य पाकाय कल्पते"—इति (सु. सू. स्था० अ० ४६) अयं च सरगुणस्यैव प्रकर्षः ॥ २७ ॥ २८ ॥—

**जङ्घाला वातपित्तघ्नास्तीक्ष्णा वस्तिविशोधनाः ॥ २९ ॥**
**कषायमधुराश्चैव लघवो बलवर्धनाः ॥**

इदानीमनुक्तमांसगुणसंग्रहार्थं तत्तदुपाधिना वर्गीकृत्य वर्गभेदेन मांसगुणा वाच्याः, तत्र समासतो द्विविधा मांसजातयः जाङ्गला, आनूपाश्च; तत्र जाङ्गलवर्गोऽष्टविधः, तद्यथा—जङ्घालाः, विष्किराः, प्रतुदाः, गुहाशयाः, प्रसहाः, पर्णमृगाः, बिलेशयाः, ग्राम्याश्चेति । तत्र एणहरिणतरक्षुप्रभृतयो जङ्घालाः, प्रशस्तजङ्घावत्त्वेनैषा संज्ञा, जङ्घालशब्दश्च वेगवति रूढः । चञ्चुचरणाभ्यां विकीर्य भक्षणाद्विष्किराः, ते च वर्तकमयूरकुक्कुटादयः । तथा प्रतुद्य बहुधा अभिहत्य भक्षयन्तीति प्रतुदाः; ते च कोयष्टिकशारिकाभृङ्गराजशुकप्रभृतयः । सिंहव्याघ्रादयो गुहाशयाः । प्रसह्य हठादाकृष्य भक्षयन्तीति प्रसहाः; ते च काककङ्ककुररश्येनगृध्रप्रभृतयः । प्रायः पर्णवति वृक्षे चरन्तीति पर्णमृगाः, ते च वृक्षशायिकावानरमालुयासर्पप्रभृतयः; वृक्षशायिका वृक्षमूषिकाः 'कटा' इति प्रसिद्धाः । बिले शेरते इति बिलेशयास्ते च शल्यकगोधामूषिकप्रभृतयः । प्रायो ग्रामे चरन्तीति ग्राम्याः; ते च छागमेषादयः । आनूपवर्गस्तु पञ्चविधः, तद्यथा—कूलचराः, प्लवाः, कोषस्थाः, पादिनो, मत्स्याश्चेति । कूले पानीयसमीपे चरन्तीति कूलचराः, ते च गजगवयमहिषप्रभृतयः । जले प्लवन्तीति प्लवाः, ते च हंससारसक्रौञ्चचक्रवाकप्रभृतयः । कोषे तिष्ठन्तीति कोषस्थाः, ते च शङ्खशुक्तिशम्बूकप्रभृतयः । पादवन्तः पादिनः, ते च कूर्मकुम्भीरकर्कटप्रभृतयः । मत्स्याः प्रसिद्धाः । एतेषां क्रमेण सामान्यगुणं निर्दिशन्नाह—जङ्घाला इत्यादि ॥ २९ ॥—

**विष्किरा मधुराः शीताः कषाया लघुपाकिनः ॥ ३० ॥**
**प्रतुदाः कषायमधुराः श्लेष्मपित्तहरा हिमाः ॥**
**बद्धमूत्रमला रूक्षाः फलाहारानिलावहाः ॥ ३१ ॥**

प्रतुदवर्गमांसगुणानाह—प्रतुदा इत्यादि । फलेनाहारीभूतेनानिलमावहन्तीत्यर्थः, फलाहारा मरुत्करा इति केचित् पठन्ति । अत्र स्वजात्यपेक्षयैव रौक्ष्यं, न मसूरा-

दिवत्। एवमनिलावहत्वेनापि वातहरत्वे स्वजात्यपकृष्टतां सूचयतीति प्रागेव व्याख्यातम्॥ ३०॥ ३१॥

गुहाशया वातहरा नेत्रगुह्यविकारिणाम्॥
हिता गुरूष्णमधुराः स्निग्धा मांसाशिनोऽधिकम्॥३२॥
प्रसहाः स्वादुवीर्योष्णास्तेषां मांसाशिनस्तु ये॥
ते शोषभस्मकोन्मादे हिताः क्षीणे विशेषतः॥ ३३॥
दृक्शुक्रास्रहितः पर्णमृगः स्वादुर्गुरुस्तथा॥
सृष्टमूत्रपुरीषश्च कासार्शःश्वासनाशनः॥ ३४॥
बिलेशया वातहरा बृंहणा रसपाकयोः॥
मधुरा बद्धविण्मूत्रा वीर्योष्णाश्च प्रकीर्तिताः॥ ३५॥
ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः॥
मधुरा रसपाकाभ्यां दीपना बलवर्धनाः॥ ३६॥

गुहाशयवर्गमांसगुणानाह—गुहाशया इत्यादि। वातहरा इत्यनेन पित्तश्लेष्मकर्तृत्वं सूचयति। तथा चकारात् कासश्वासकार्श्यहरत्वं च बोध्यम्। उक्तं च,—"वातं हन्युः श्लेष्मपित्ते च कुर्युः स्निग्धाः कासश्वासकार्श्यापहाः स्युः"—इति (सु. सू. स्था. अ. ४६)॥ ३२–३६॥

कूलचरा मरुत्पित्तहरा वृष्या बलावहाः॥
मधुरस्निग्धशीताश्च मूत्रलाः श्लेष्मलास्तथा॥ ३७॥
प्लवा वृष्या हिमाः स्निग्धा रक्तपित्तानिलापहाः॥
सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः॥ ३८॥
कोषस्थाः पादिनश्चैव स्निग्धाः शीतानिलापहाः॥
वर्चस्या मधुरा वृष्याः पित्तघ्नाः कफकारकाः॥ ३९॥

अनूपानां गुणमाह—कूलचरा इत्यादि॥ ३७–३९॥

मत्स्याः स्निग्धोष्णमधुरा वातजिन्मललोमनाः॥
पित्तमांसबलश्लेष्मशुक्राभिष्यन्दकारकाः॥ ४०॥

यद्यपि मत्स्या द्विविधाः सामुद्रा, नादेयाश्च; तत्र सामुद्राणां तिमिप्रभृतीनां प्रायशोऽनुपयोगात् तानुपेक्ष्य नादेयानां गुणा वाच्याः, नादेयशब्दश्च समुद्रभिन्नजलभवमात्रोपलक्षकः, तेन सरस्तडागजानामपि ग्रहणं; तत्र मत्स्यानां सामान्यगुणं निर्दिश-

न्नाह—मत्स्या इत्यादि । मललोमना इति मलानुलोमनाः सृष्टमला इत्यर्थः, अत एव "सृष्टविण्मूत्रमारुताः"—इति माधवकरः ॥ ४० ॥

रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्तिजित् ॥
कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् ॥ ४१ ॥
शकुलो मधुरो रुच्यः कषायो विशदो लघुः ॥
शिलिन्दः श्लेष्मलो वल्यो विपाके मधुरो गुरुः ॥ ४२ ॥
वातपित्तहरो वृष्य आमवातकरो मतः ॥
आडिमत्स्यो गुरुः स्निग्धः स्वादुर्वृष्यो वलप्रदः ॥ ४३ ॥
इल्लिसो मधुरः स्निग्धः पित्तश्लेष्मप्रकोपणः ॥
नृणां व्यवायनित्यानां हितो वह्निविवर्धनः ॥ ४४ ॥
एलङ्गः स्निग्धो मधुरो गुरुविष्टम्भिशीतलः ॥
पर्वतो मधुरः स्निग्धः कषायानुरसो गुरुः ॥ ४५ ॥
भाकुटो मधुरो वृष्यः कषायानुरसो गुरुः ॥
पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः ॥ ४६ ॥
दूषयेद्रक्तपित्तं च कुष्ठरोगं करोत्यसौ ॥
वर्मिमत्स्यस्तथा वृष्यो मधुरो रसपाकतः ॥ ४७ ॥
कुलिशः कषायमधुरः कुब्जकः कफपित्तहा ॥
शृङ्गी तु वातशमनः स्निग्धः श्लेष्मप्रकोपणः ॥ ४८ ॥
मद्गुरो मधुरो वृष्यो विपाके मधुरो गुरुः ॥
गुत्थमत्स्यो गुरुः स्निग्धः श्लेष्मलो वातनाशनः ॥ ४९ ॥
कवय्यः स्निग्धमधुराश्चलदङ्गो गडो यथा ॥
क्षुद्रमत्स्यास्तु लघवो ग्राहिणो ग्रहणीहिताः ॥ ५० ॥
मत्स्यकूर्मखगाण्डानि स्वादुवाजीकराणि च ॥

मत्स्यभेदेन गुणभेदं दर्शयन्नाह—रोहित इत्यादि । कुलिशः कुडिश इति प्रसिद्धः । कुब्जक इञ्जाकः, अन्ये व्याघ्रमत्स्यमाहुः; स च आडिमत्स्याकृतिर्वृहत्कायः । गुत्थमत्स्यो देशान्तरे प्रसिद्धः, अन्ये तु चन्द्रकमाहुः । चलदङ्गश्चेङ्ग इति प्रसिद्धः । गडो यथेति रूक्ष इत्यर्थः ॥ ४१–५० ॥—

**चरः शरीरावयवः स्वभावो धातवः क्रियाः ॥ ५१ ॥**
**लिङ्गं प्रमाणं संस्कारो मात्रा चास्मिन् परीक्ष्यते ॥**

इदानीं गौरवलाघवज्ञानार्थं ये ये विवेचनीयास्तानाह संक्षेपेण—चर इत्यादि। अस्मिन्निति अन्नपानगुणाधिकारे। चर्यत इति चरो देशो भक्ष्यश्च, चर गतिभक्षणयोरित्यतो निष्पन्नत्वात् सामान्येन गृह्यते; कस्मिन् देशेऽयं विहरति धन्वनि अनूपे जले वियति वा, किं पुनरयमाहरति गुरु लघु शीतमुष्णं स्निग्धं रूक्षं वा; तत्तद्विहाराहारगुणभावितशरीरधातोर्मृगस्य पक्षिणो वा तत्तद्गुणमेव मांसमिति। तथाहि चरकः,—"चरोऽनूपजलाकाशधन्वाद्यो भक्ष्यसंविधिः—" इति (च. सू. स्था. अ. २७)। भक्ष्यसंविधिर्भक्षणम्। तत्रानूपजलाकाशधन्वाद्य इत्यनेन गतिरूपश्चर उच्यते, भक्ष्यसंविधिरित्यनेन भक्ष्यरूपश्चर उच्यते। एतदुदाहरणं यथा,—"जलजानूपजाश्चैव जलानूपचराश्च ये। गुरुभक्ष्याश्च ये सत्त्वाः सर्वे ते गुरवः स्मृताः॥ लघुभक्ष्यास्तु लघवो धन्वजा धन्वचारिणः"—इति (च. सू. स्था. अ. २७)। अत्र जलजत्वेन अनूपजत्वेन च जले वा अनूपे वा गतिरेव दर्श्यते, नहि जलादौ ये जातास्ते प्रायोऽन्यत्रावतिष्ठन्ते। येत्वन्यत्र जाता अप्यन्यत्र तिष्ठन्ते प्रायः काकमद्गुप्रभृतयस्तद्ग्रहणार्थमाह—जलानूपचराश्च य इति। एतेन सामान्येन जले प्रायोऽवस्थानादिह जलचरत्वम्। एवमनूपचराद्यपि ज्ञेयम्। गुरुभक्ष्या इत्यादिना तु भक्ष्यरूपचरकृतगुणकथनम्। धन्वजा धन्वचारिण इत्यपि गतिरूपचरगुणकथनम्। अत्र चकारो लुप्तनिर्दिष्टो द्रष्टव्यः। तेन बाहुल्येन आकाशचारिणामपि श्येनादीनां स्वजातिप्रसहान्तरापेक्षया लाघवं बोध्यं, आकाशस्य लघुत्वात्। ये तु ब्रुवते आकाशचारिणां गौरवलाघवानियमादकथनमिति; तन्न, तथा सति आकाशस्य अप्रयोजनकत्वेन चरोऽनूपजलाकाशधन्वाद्य इत्याकाशकथनं निष्प्रयोजनं स्यात्। एवंच देशविशेषाद्भक्ष्यविशेषाच्च मृगादीनां गौरवं लाघवं वा निर्देश्यमिति चरपरीक्षाप्रयोजनमिति भावः। शरीरावयव इति शरीरावयवपरीक्षाप्रयोजनं यथा,—"ऊरुग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम्"—इति (सु. सू. स्था. अ. ४६), तथा,—"सक्थिमांसाद्गुरुतरं क्रोडस्कन्धशिरस्पदाम्"—इत्यादि। स्वभाव इति स्वभावस्तद्द्रव्यजातिप्रबद्धः स्वाभाविको धर्मः, तत्प्रतिनियतं गुरुलाघवं, यथा,—"स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः" (च. सू. स्था. अ. २७) इत्यादि। धातव इति शोणितादयः, तदुदाहरणं च, "धातूनां शोणितादीनां गुरु विद्याद्यथोत्तरम्"—(च. सू. स्था. अ. २७) इति। क्रियेति क्रिया चेष्टा, तद्यथा,—'अलसेभ्यो विशिष्यन्ते प्राणिनो ये बहुक्रियाः—" (च. सू. स्था. अ. २७) इति; विशिष्यन्त इति लघुत्वेन विशिष्टा भवन्तीत्यर्थः। लिङ्गमिति लिङ्गं स्त्रीत्वादि; यदाह,—"गौरवं लिङ्गसामान्ये पुंसां स्त्रीणां तु लाघवम्—" (च. सू. स्था. अ. २७) इति; लिङ्गसामान्य इति जातिसामान्ये; तथाच हारीतः,—

"चतुष्पादेषु लघ्वी स्त्री विहगेषु लघुः पुमान्"—इति; जतूकर्णेऽप्युक्तम्,—"वन्ध्या छागी प्रशस्ता स्यादभावे वर्करी मता"—इति; तथाच पराशरः,—"चतुष्पात्सु स्त्रियो ग्राह्याः पुमांसो विहगेषु च"—इति; यत्तु भाषितं काशिराजेन,—"छागमेव नपुंसकं"—इति तदनार्षं, सर्वतन्त्रविरोधात् । प्रमाणमिति तद्यथा,—"महाशरीरा गुरवः स्वजातौ लघवोऽन्यथा"—इति ( च. सू. स्था. अ. २७ )। संस्कारोऽन्यथात्वं; तद्यथा मांसरसगुणनिर्देशे सुश्रुतः,—"स्नेहगोरसधान्याम्लफलाम्लैरन्वितं च यत् । यथोत्तरं गुरुं विद्यात्"—इति (सु. सू. स्था. अ. ४६), चरकेऽपि,—"गुरूणां लाघवं विद्यात् संस्कारात् सविपर्ययम् । व्रीहेर्लाजा यथाच स्युः शक्तूनां सिद्धपिण्डकाः"—( च. सू. स्था. अ. २७ ) इति; सविपर्ययमिति संस्काराल्लघूनामपि गौरवं विद्यादित्यर्थः, गुरोरपि व्रीहेर्लाजा लघव इत्यर्थः ; लघूनामपि शक्तूनां सिद्धपिण्डका गुरव इत्यर्थः, सिद्धपिण्डका इत्यग्निपाचिताः पिण्डाः । मात्रेति मात्रावशाद्गुरूणामपि लघुत्वं लघूनामपि गुरुत्वमित्यर्थः; तदुक्तम्,—"अल्पादाने गुरूणां तु लघूनां चातिसेवने । मात्रा कारणमुद्दिष्टं द्रव्याणां गुरुलाघवे"—( च. सू. स्था. अ. २७ ) इति; मात्रा चेति चकारेण वह्निरनुक्तोऽपि मात्रायाः कारणभूतः समुच्चीयते, तेन मात्राया भूयस्त्वाल्पीयस्त्वेनाग्निरपि परीक्ष्यत इत्यर्थः, तेनाग्निबलमभिसमीक्ष्य भूयसी अल्पीयसी वा मात्रा कार्येति केचित् । एवं चरादिकं परितः सर्वतोभावेन विचार्य मांसादिद्रव्याणां गुरुलाघवं वाच्यमिति पिण्डार्थः ॥ ५१ ॥—

**कृशात् स्वयं मृतान्मांसं विषव्यालहतादपि ॥ ५२ ॥**
**बालं तोयाग्निविक्लिन्नं रोगि शुष्कं न पूजितम् ॥**
**अगोचरभृतं यच्च मेध्यं वृद्धं तथैव च ॥ ५३ ॥**
**सिद्धं पर्युषितं तद्वद्दुर्गन्धि ग्रथितं च यत् ॥**
**क्रिमिजग्धं च यन्मांसमायुष्कामो विवर्जयेत् ॥ ५४ ॥**

यादृशं मांसमनुपादेयं तदाह—कृशादित्यादि । अगोचरभृतमित्यानूपं धन्वदेशे पुष्टम् । मेध्यमिति मेदुरम् । सिद्धं पर्युषितमिति पक्वं सत् पर्युषितम् ॥ ५२–५४ ॥

**एभ्योऽन्येषामुपादेयं मांसं दोषविवर्जितम् ॥**
**लावतित्तिरिसारङ्गकुरङ्गैणकपिञ्जलाः ॥ ५५ ॥**
**मयूरवर्मिकूर्माश्च श्रेष्ठा मांसगणेष्विह ॥**
**पोताधानास्तु सर्वेषां सुस्निग्धा लघुदीपनाः ॥ ५६ ॥**
**महाप्रमाणा गुरवः क्रियावन्तोऽल्पचेष्टिनः ॥**
**मत्स्याण्डानि विशेषेण वातपित्तहराणि च ॥ ५७ ॥**

ज्ञेयानि हृद्यरुच्यानि कटुपाकीनि चैव हि ॥
हंसवीजं परं वल्यं बृंहणं वातनाशनम् ॥
पाके लघुतरं प्रोक्तं सर्वामयविवर्जितम् ॥ ५८ ॥
विष्टम्भिनः शुष्कमत्स्या अवल्या दुर्जरा मताः ॥
सिध्मला ग्रहणीदोषशमनी पवनापहा ॥ ५९ ॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे
मांसवर्गो नाम द्वितीयो वर्गः ।

उपादेयमाह—एभ्य इत्यादि । सारङ्गो गौरहरिणः । वर्म शकलं तदस्यास्तीति वर्मी रोहितः; तदुक्तं चरके,—"रोहितो मत्स्यानाम्"—इति, ब्रह्मदेवोऽपि—"वर्मी महाशकलो रोहितभेदः, न तु सर्पाकारमत्स्यः"—इत्याह ॥ ५५–५९ ॥

इति श्रीशिवदासेनविरचितायां द्रव्यगुणसंग्रहटीकायां मांसवर्गो नाम द्वितीयो वर्गः ।

---

शाकानि प्रायशस्तानि विष्टम्भीनि गुरूणि च ॥
रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥ १ ॥

अत्र व्यञ्जनेषु श्रेष्ठत्वात् प्रथमं मांसगुणमभिधाय, अनन्तरं शाकगुणाः वाच्याः, तत्र प्रथमं शाकानां सामान्यगुणमाह—शाकानीत्यादि ॥ १ ॥

पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ॥
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥ २ ॥

तत्र शाकभेदेन गुणभेदमभिधातुं शाकभेदमाह—पत्रमित्यादि । संस्वेदजमिति छत्रकादि ॥ २ ॥

जीवन्ती सर्वदोषघ्नी चक्षुष्या मधुरा हिमा ॥

तत्र शाकेषु जीवन्ती श्रेष्ठा, उक्तं हि वाग्भटे,—"वरा शाकेषु जीवन्ती सार्षपस्त्ववरः स्मृतः"—( वा. सू. स्था. अ. ६ ) इति; तद्गुणमाह—जीवन्तीत्यादि । जीवन्ती स्वनामख्याता 'स्वर्णनाड' इति चक्रः । सा द्विधा मधुरा, अमधुरा च, तत्र मधुराया एव त्रिदोषहन्तृत्वं, अमधुरायास्तु वातपित्तहन्तृत्वमेव । तदुक्तं वृद्धवाग्भटे,—"चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा । शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु"—इति ( वृ. वा. सू. स्था. अ. ७ ) तत्रामधुरायाः किंचिन्न्यूनत्वेन न त्रिदोषहरत्वमिति बोधयति । अत एवाह चरकः,—"भण्डी शतावरीशाकं वला जीवन्तिजं च

यत् । पर्वण्याः पर्वपुष्प्याश्च वातपित्तहरं मतम्"—इति (च. सू. स्था. अ. २७) ॥—

**तण्डुलीयो ह्यसृक्पित्तविषनुत् स्वादुपाकतः ॥ ३ ॥**

तण्डुलीयगुणानाह—तण्डुलीय इत्यादि । तण्डुलीयः क्षुद्रमारिषः । पाकत इत्यनन्तरं चकारो लुप्तनिर्दिष्टो ज्ञेयः, तेन रसतोऽपि स्वादुरित्यर्थः ॥ ३ ॥

**वास्तूकस्तु सरो हृद्यो दोषनुत् पाकतो लघुः ॥**
**सक्षारः क्रिमिहा मेध्यो रुच्योऽग्निबलवर्धनः ॥ ४ ॥**

वास्तुकगुणानाह—वास्तुक इत्यादि । दोषनुदिति त्रिदोषहरः । पाकतो लघुरिति कटुरित्यर्थः । उक्तं च—"कटुर्विपाके क्रिमिहा मेधाग्निबलवर्धनः । सक्षारः सर्वदोषघ्नो वास्तूको रोचनः सरः"—इति (सु. सू. स्था. अ. ४६) । चरकेऽपि त्रिदोषघ्नत्वमुक्तम् ॥ ४ ॥

**लघुपत्री तु या चिल्ली सा वास्तूकसमा मता ॥**

चिल्लीगुणानाह—लघुपत्रीत्यादि । चिल्ली गौरवास्तूकः । क्षेत्रवास्तूक इत्यन्ये ॥—

**मूलकपोतिका कण्ठ्या सर्वदोषहरी लघुः ॥ ५ ॥**
**कटुतिक्तरसा हृद्या रोचनी वह्निदीपनी ॥**

मूलकस्य बालमहदामसिद्धशुष्कभेदेन गुणमाह—मूलकपोतिकेत्यादि । मूलकपोतिका अतिबालमूलकम् । अत्र स्निग्धसिद्धाया एव मूलकपोतिकायाः सर्वदोषहरत्वं, अन्यथा तु दोषकर्तृत्वं; यदाह मूलकगुणे वाग्भटः,—"वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम्—" (वा. सू. स्था. अ. ६) इति । अत्र सर्वमिति बालं वृद्धं च । सर्वपदं च पूर्वेण परेण च संबध्यते । तेन सर्वदोषहरस्यापि बालमूलकस्यामावस्थायां दोषलत्वं नतु वृद्धस्यैवेत्यरुणः ॥ ५ ॥—

**महत्तद्गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत् ॥ ६ ॥**

महतः परिणतस्य मूलकस्य गुणमाह—महदित्यादि । आममित्यनग्निपक्वमिति निबन्धसंग्रहः ॥ ६ ॥

**तदेव स्निग्धसिद्धं तु वातनुत् कफपित्तकृत् ॥**
**शुष्कं तु शोथशमनं गरदोषहरं लघु ॥ ७ ॥**

शुष्कमूलकगुणमाह—शुष्कमित्यादि । अस्य च वातकफहरत्वं ज्ञेयम् । यदाह,—"बालं दोषहरं वृद्धं त्रिदोषं मारुतापहम् । स्निग्धसिद्धं विशुष्कं तु मूलकं कफवातजित्"—इति (च. सू. स्था. अ. २७) ॥ ७ ॥

**तत्फलं कफवातघ्नं तत्पुष्पं कफपित्तजित् ॥ ८ ॥**

मूलकफलपुष्पयोर्गुणमाह—तत्फलमित्यादि ॥ ८ ॥

Enhydra Fluctuans

हिलमोची तु कुष्ठघ्नी भेदनी कफपित्तनुत् ॥
उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ ९ ॥
स्वादुपाकरसा वृष्या वातपित्तमदापहा ॥
सुनिषण्णं तु संग्राहि अविदाहि त्रिदोषनुत् ॥ १० ॥

सुनिषण्णकगुणानाह—सुनिषण्णमित्यादि । सुनिषण्णकं सुसुनिया इति ख्यातम् । ब्रह्मदेवस्तु तल्लक्षणमाह,—"चाङ्गेरीसदृशैः पत्रैः सुनिषण्णं चतुर्दलम् । शाको जलान्विते देशे चतुष्पत्रीति कथ्यते"—इति ॥ ९ ॥ १० ॥

मारिषो मधुरः शीतो विष्टम्भी गुरुपित्तनुत् ॥
पालङ्क्या बद्धविण्मूत्रा कफघ्नी तण्डुलीयवत् ॥ ११ ॥

पालङ्कीगुणानाह—पालङ्क्या इत्यादि । तण्डुलीयवदित्यनेन मधुररसपाकत्वादिकमतिदिशति । अस्याश्च कफहरत्वं रूक्षत्वादिप्रकर्षात् ॥ ११ ॥—

कासमर्दोऽग्निदः कण्ठ्यः स्वादुस्तिक्तस्त्रिदोषनुत् ॥

कासमर्दकगुणानाह—कासमर्द इत्यादि । अस्य च त्रिदोषहरत्वेऽपि विशेषात् पित्तहरत्वं बोध्यम् । यदाह सुश्रुतः,—"मधुरः कफवातघ्नः पाचनः कण्ठशोधनः । विशेषतः पित्तहरः सतिक्तः कासमर्दकः"—इति ( सु. सू. स्था. अ. ४६ ) ॥—

कालशाकं गरश्लेष्मशोथघ्नं दीपनं कटु ॥ १२ ॥
कलायपत्रं मधुरं रूक्षं भेदि च वातलम् ॥

कलायशाकगुणानाह—कलायपत्रमित्यादि । कलायस्त्रिपुटकलायः, सतीनाख्यस्य वक्ष्यमाणत्वात् ॥ १२ ॥

सतीनकं त्रिदोषघ्नं कटुपाकं सतिक्तकम् ॥ १३ ॥

सतीनकगुणानाह—सतीनक इत्यादि । सतीनको वर्तुलकलायः । अस्य च त्रिदोषहरत्वेऽपि विशेषात् कफपित्तहरत्वं ज्ञेयम्, "कफपित्तहरं तिक्तं शीतं कटु विपच्यते—" इति चरकसंवादात् ॥ १३ ॥

चाणकं दुर्जरं स्वादु कौसुम्भं तु कफापहम् ॥

चाणकशाकगुणानाह—चाणकमित्यादि । स्वाद्विति रसतः पाकतश्च । कफापहमिति कफहरम् ॥—

पुनर्नवायुग्ममुष्णवीर्यं रसायनं सरम् ॥ १४ ॥
कफानिलामदुर्नामब्रध्नशोथोदरापहम् ॥
कञ्चटं तिक्तकं ग्राहि रक्तपित्तापहं स्मृतम् ॥ १५ ॥

चाङ्गेरी तु कषायोष्णा मधुरा वह्निदीपनी ॥
साम्ला वातकफौ हन्ति ग्रहण्यर्शोविकारनुत् ॥ १६ ॥

चाङ्गेरीगुणानाह—चाङ्गेरीत्यादि । चाङ्गेरीगुणे साम्लेति ईषदम्ला ॥ १४–१६ ॥

चुक्रकं दुर्जरं भेदि अम्लं पित्तकरं गुरु ॥
कलम्बिका गुरुर्वृष्या कषाया स्तन्यवृद्धिदा ॥ १७ ॥
सार्षपं गुरु शाकं च बद्धमूत्रं त्रिदोषकृत् ॥
ग्रीष्मसुन्दरकस्तिक्तो रोचनः कफपित्तनुत् ॥ १८ ॥
नाडीचः पिच्छिलः शीतो विष्टम्भी वातकोपनः ॥
रक्तपित्तहरः स्वादुर्मण्डूक्याद्याश्च तद्गुणाः ॥ १९ ॥

मण्डूकपर्णीगुणानाह—मण्डूक्याद्या इत्यादि । मण्डूकी मण्डूकपर्णी मणिमणीति ख्याता । आदिशब्दाद्गोजिह्वादीनां ग्रहणं; गोजिह्वा दार्वीशाकः ॥ १७–१९ ॥

पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ॥
फलं तस्य त्रिदोषघ्नं मूलं तस्य विरेचनम् ॥ २० ॥
निम्बः पित्तकफच्छर्दिव्रणहृल्लासकुष्ठनुत् ॥
पर्पटस्तु सवेत्राग्रस्तिक्तः पित्तकफापहः ॥ २१ ॥
त्रिदोषशमनी वृष्या काकमाची रसायनी ॥
नात्युष्णा शीतवीर्या च भेदनी कुष्ठनाशिनी ॥ २२ ॥
वायुं वत्सादनी हन्यात्

गुडूचीगुणमाह—वायुमित्यादि । वत्सादनी गुडूची । अस्याश्च पित्तकफहन्तृत्वं बोध्यं, तदुक्तं सुश्रुते,—"अटरूषकवेत्राग्रगुडूचीनिम्बपर्पटाः । किराततिक्तसहितास्तिक्ताः पित्तकफापहाः"—इति । अन्ये तु पत्रप्रधाने गुडूचीशाके तिक्तरसप्राधान्यात् पित्तकफहरत्वमेवेत्याहुः ॥ २०–२२ ॥—

पित्तघ्नी तु सुवर्चला ॥

सुवर्चलागुणमाह—पित्तघ्नीत्यादि । सुवर्चला सूर्यावर्तभेदः; अन्ये तु मारिषसदृशनालमार्तगलसदृशपत्रं लम्फकमाहुः ॥—

राजक्षवकशाकं तु त्रिदोषशमनं लघु ॥ २३ ॥
ग्राहि शस्तं विशेषेण ग्रहण्यर्शोविकारिणाम् ॥

राजक्षवकगुणानाह—राजक्षवकशाकमित्यादि । राजक्षवको दुग्धिका; अन्ये तु राजक्षवको बृहत्पत्रः क्षवथुकारक इत्याहुः ॥ २३ ॥—

**दीपनाः कफवातघ्नाश्चिरविल्वाङ्कुराः सराः ॥ २४ ॥**

चिरविल्वाङ्कुरगुणानाह—दीपना इत्यादि । चिरविल्वः करञ्जकः ॥ २४ ॥

**न्यग्रोधोदुम्बराश्वत्थप्लक्षपद्मादिपल्लवाः ॥**
**कषायास्तम्भनाः शीता हिताः पित्तातिसारिणाम् ॥ २५ ॥**
**अवल्गुजः कटुः पाके तिक्तः पित्तकफापहः ॥**

अवल्गुजगुणानाह—अवल्गुजेत्यादि । अवल्गुजो वागुजोतपन्नम् ॥ २५ ॥—

**वार्ताकं कटु तीक्ष्णोष्णं मधुरं कफवातजित् ॥ २६ ॥**
**रोचनं वह्निजननं जीर्णं तु पित्तलं मतम् ॥**
**कण्डूकुष्ठक्रिमिघ्नानि कफवातहराणि च ॥ २७ ॥**
**फलानि बृहतीनां तु कटुतिक्तलघूनि च ॥**

वार्ताकगुणानाह—वार्ताकमित्यादि । जीर्णमिति परिणतम् । अत्र "जीर्णं पित्तलमित्यनेनापरिणतस्यापि पित्ताविरोधित्वमिति बोधयति । अत एव माधवेन वार्ताकगुणे "हृद्यं रुच्यमपित्तलम्"—इत्युक्तम् । अन्ये तु पठन्ति,—"सा बाला कफपित्तघ्नी पक्वा सक्षारपित्तला । सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी"—इति । अन्ये तु कण्टकारीफलं पृथगेव पठन्ति ॥ २६–२७ ॥—

**कारवेल्लः सकर्कोटो रोचनः कफपित्तनुत् ॥ २८ ॥**

कारवेल्लकर्कोट्योर्गुणानाह—कारवेल्ल इत्यादि । कारवेल्लः स्वनामख्यातः । कर्कोटो बृहत्कर्कोटोऽल्पकर्कोटी च ॥ २८ ॥

**कूष्माण्डकं पित्तहरं बालं मध्यं कफावहम् ॥**
**पक्वं लघूष्णं सक्षारं दीपनं बस्तिशोधनम् ॥ २९ ॥**
**सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम् ॥**
**सक्षारा मधुरा रूक्षा रुच्या वातकफापहा ॥ ३० ॥**
**अश्मरीभेदनी गुर्वी नाडी कूष्माण्डसंभवा ॥**

कूष्माण्डस्य बालाद्यवस्थाभेदेन गुणमाह—कूष्माण्डकमित्यादि । मध्यस्य कफावहत्वेन वातपित्तहरत्वं सूच्यते । यदाह वाग्भटः,—"कूष्माण्डं वातपित्तजित्"—इति । अत एव कफमावहति करोतीति कफावहमिति डल्हनोऽप्याचष्टे । अयं तु सौश्रुतः श्लोकः । पक्वमित्यत्र शुक्लमिति पठ्यते, तत्रापि स एवार्थः, पक्वस्य शुक्लवर्णत्वात्;

चक्रेण स्पष्टार्थं पक्वमित्युक्तम् । सर्वदोषहरमिति सर्वग्रहणं रक्तोपसंग्रहार्थम् । 'सर्वदोषसहम्' इत्यन्ये पठन्ति । अत्रायमर्थः–न करोति नवा शमयतीत्यर्थ इति निबन्धसंग्रहकृतः । चेतोविकारा अपस्मारादयः ॥ २९ ॥ ३० ॥—

**एर्वारुकं सकर्कारु सुपक्वं कफवातकृत् ॥ ३१ ॥**
**सक्षारं मधुरं रुच्यं दीपनं नातिपित्तलम् ॥**

एर्वारुकगुणानाह—एर्वारुकमित्यादि । कफवातकृदिति कफवातकरम् । एर्वारुकं लोमशशाकं, कर्कोटीति डल्लनः, राजकर्कोटीत्यन्ये, 'फुटी' इति संज्ञया गौडे प्रसिद्धमिति त्रिविक्रमः । कर्कारु कर्कोटीभेदः ॥ ३१ ॥—

**बालं सनीलं त्रपुषं तेषां पित्तहरं स्मृतम् ॥ ३२ ॥**
**तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम् ॥**

त्रपुषगुणानाह—त्रपुषमित्यादि । त्रपुषं मायाम्बु । सनीलमिति नीलावस्थम् । बालमित्यभिनवम् । पाण्ड्विति पाण्डुवर्णं, मध्यावस्थमित्यर्थः । कफकृत् कफकरम् । जीर्णमिति परिणतम् ॥ ३२ ॥—

**शीर्णवृन्तं कफहरं सक्षारं मधुरं हि तत् ॥ ३३ ॥**
**भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु ॥**
**अलाबुः शीतला रूक्षा गुर्वी वर्चःप्रभेदिनी ॥ ३४ ॥**
**अलाबुनाडिका गुर्वी मधुरा पित्तनाशिनी ॥**
**वातश्लेष्मकरी रूक्षा शीतला मलभेदिनी ॥ ३५ ॥**
**तिक्तालाबुरहृद्या तु वामनी वातपित्तजित् ॥**
**कुमुदोत्पलनालास्तु सपुष्पाः सफलाः स्मृताः ॥**
**शीताः स्वादुकषायाश्च कफमारुतकोपनाः ॥ ३६ ॥**

शीर्णवृन्तगुणानाह—शीर्णवृन्तमित्यादि । शीर्णवृन्तं सुखाशकमिति चक्रः । अत्र शीर्णमित्यादिः मधुरं हितमित्यन्तो बालस्य गुणः, भेदनं दीपनं हृद्यमिति मध्यस्य, आनाहाष्ठीलनुल्लघ्विति जीर्णस्येति निबन्धसंग्रहः । अत्राष्ठीला मूत्राष्ठीला, नतु वाताष्ठीला, अस्या वातप्रशमकत्वादिति चक्रः ॥ ३३–३६ ॥

**हस्तिमध्वालुकादीनि रक्तपित्तहराणि च ॥**
**गुरूणि स्वादुशीतानि स्तन्यशुक्रकराणि च ॥ ३७ ॥**

कन्दगुणमाह—हस्तीत्यादि । हस्त्यालुकं मध्वालुकं च स्वनामख्यातम् ॥ ३७ ॥

विदारीकन्दो बल्यश्च वातपित्तहरश्च सः ॥
मधुरो बृंहणो वृष्यः शीतः स्वर्योऽतिमूत्रलः ॥ ३८ ॥

विदारीकन्दगुणानाह—विदारीकन्द इत्यादि । विदारीकन्दो द्विविधः अल्पबहुक्षीरभेदेन; तत्राल्पक्षीरः 'हस्तिपादक' इति ख्यातः, बहुक्षीरस्तु दीर्घमूलस्तस्य कन्दो 'भूमिकुष्माण्ड' इति लोके ॥ ३८ ॥

वातपित्तहरी वृष्या स्वादुतिक्ता शतावरी ॥
महती सैव हृद्या च मेधाग्निबलवर्धिनी ॥ ३९ ॥
ग्रहण्यर्शोविकारघ्नी वृष्या शीता रसायनी ॥
कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः ॥ ४० ॥

महदल्पभेदेन शतावरी द्विविधा, तस्या गुणानाह—वातपित्तहरीत्यादि । तस्या एवेति शतावर्या इत्यर्थः ॥ ३९ ॥ ४० ॥

तरूटबिसशालूककौञ्चादनकशेरुकम् ॥
शृङ्गाटकाङ्कलोड्यं च गुरु विष्टम्भि शीतलम् ॥ ४१ ॥

तरूटादीनां गुणानाह—तरूटमित्यादि । तरूटकं कह्लारकन्दः । क्रौञ्चादनं घेञ्चुलुका । अङ्कलोड्यं ह्रस्वोत्पलकन्दः । शृङ्गाटकं फलमपि कशेरुकादिकन्दगुणसामान्यादिहैव पठ्यते । कशेरुकं द्विविधं क्षुद्रं महच्च; तत्र क्षुद्रं चिञ्चोटक इति ख्यातं, महत्तु राजकशेरुकम् ॥ ४१ ॥

पिण्डालुकं कफहरं गुरु वातप्रकोपणम् ॥

पिण्डालुकगुणानाह—पिण्डालुकमित्यादि । कफं हरतीति कफहरम् ॥—

वज्राख्यकन्दः श्लेष्मघ्नः कटुपाकश्च पित्तकृत् ॥ ४२ ॥

वज्रकन्दगुणानाह—वज्रेत्यादि । वज्राख्यकन्दः सुरेन्द्रकन्दः 'चामघास' इति लोके ॥ ४२ ॥

वेणोः करीराः कफला मधुरा रसपाकतः ॥
विदाहिनो नातिबलाः सकषाया विरूक्षणाः ॥ ४३ ॥

वंशकरीरगुणानाह—वेणोरित्यादि । अत्र केचिन्मधुररसपाकस्य विदाहित्वं नोपपद्यत इति कटुका रसपाकत इति पठन्ति, अन्ये तु मधुरस्यापि विदाहित्वं प्रभावादेव समर्थयन्ति ॥ ४३ ॥

ऐन्दुकं च नदीमाषं विशदं गुरु शीतलम् ॥

ऐन्दुकनदीमाषयोर्गुणानाह—ऐन्दुकमित्यादि । ऐन्दुकं निक्षारम् । नदीमाषकं 'उन्दीमान' इति ख्यातम् ॥—

शूरणो दीपनो रुच्यः कफघ्नो विशदो लघुः ॥ ४४ ॥
विशेषादर्शसां पथ्यो भूकन्दस्त्वतिदोषलः ॥

शूरणभूकन्दयोर्गुणानाह—सूरण इत्यादि । शूरणो वनकन्दः । भूकन्द इति ग्राम्यकन्दः । अयमेव सुश्रुते स्थलकन्दसंज्ञया पठ्यते । भूकन्दः प्रावृड्भवः प्रसिद्ध एवेत्यरुणः ॥ ४४ ॥—

माणकं स्वादु शीतं च गुरु चापि प्रकीर्तितम् ॥ ४५ ॥
कदल्या बलकृन्मूलं वातपित्तापहं गुरु ॥

कदलीमूलगुणानाह—कदल्या इत्यादि । बलकृत् बलकरम् ॥ ४५ ॥—

आमवातकरी कच्ची कफकृद्गुरुपिच्छला ॥ ४६ ॥

कच्चीगुणानाह—आमेत्यादि । कफकृत् कफकरी ॥ ४६ ॥

वाराहकन्दः श्लेष्मघ्नः कटुको रसपाकतः ॥
मेहकुष्ठक्रिमिहरो बल्यो वृष्यो रसायनः ॥ ४७ ॥

वाराहकन्दगुणानाह—वाराहेत्यादि । वाराहकन्दो 'वक्कालुक' इति ख्यातः ॥ ४७ ॥

तालस्य नारिकेलस्य खर्जूरस्य शिरांसि च ॥
कषायस्निग्धमधुरबृंहणानि गुरूणि च ॥ ४८ ॥
गुवाकस्य शिरस्तद्वच्छेदनं मदकारकम् ॥

मूलप्रसङ्गेनाग्रगुणमपि केषांचिदाह—तालस्येत्यादि ॥ ४८ ॥—

बालं ह्यनार्तवं जीर्णं व्याधितं क्रिमिभक्षितम् ॥ ४९ ॥
कन्दं विवर्जयेत् सर्वं यो वा सम्यक् न रोहति ॥

हेयं कन्दमाह—बालमित्यादि । न रोहति न जायते ॥ ४९ ॥—

शणस्य कोविदारस्य कर्बूदारस्य शाल्मलेः ॥ ५० ॥
पुष्पं संग्राहि शस्तं च रक्तपित्ते विशेषतः ॥
वृषागस्त्यस्य पुष्पाणि क्षयकासापहानि च ॥ ५१ ॥
आगस्त्यं नातिशीतोष्णं नक्तान्धानां च शस्यते ॥
राजवृक्षस्य निम्बस्य मुष्ककार्काशनस्य च ॥ ५२ ॥
कफपित्तहरं पुष्पं कुष्ठघ्नं कुटजस्य च ॥
सतिक्तमधुरं शीतं पद्मं पित्तकफापहम् ॥ ५३ ॥

मधुरं पिच्छिलं स्निग्धं कुमुदं ह्लादि शीतलम् ॥
सिन्दुवारं जीवनीयं हिमं पित्तविनाशनम् ॥ ५४ ॥
यथावृक्षं विजानीयात् कुसुमस्य गुणागुणान् ॥

पुष्पशाकगुणमाह—शणस्येत्यादि । अगस्त्यो वङ्गसेनः । तयोर्मध्ये आगस्त्यस्य विशेषगुणमाह—आगस्त्यमित्यादि राजवृक्षः स्वर्णालुः । निबन्धसंग्रहस्तु रक्तवृक्षस्येति पठित्वा रक्तचन्दनस्येति व्याचष्टे । मुष्कको घण्टापारुली । सिन्दुवारं निर्गुण्डीपुष्पमिति डल्हणः । उपसंहरति—यथेत्यादि ॥ ५०–५४ ॥—

छत्रकास्तु पलालेक्षुकरीषक्षितिरेणुजाः ॥ ५५ ॥
सर्वे संस्वेदजाः शीताः कषायाः स्वादुपिच्छिलाः ॥
गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः ॥ ५६ ॥
कर्कशं परिजीर्णं च क्रिमिजुष्टमदेशजम् ॥
विवर्जयेत् पत्रशाकं यदकालविरोहि च ॥ ५७ ॥

यादृशं पत्रशाकं हेयं तदाह—कर्कशमित्यादि ॥ ५५–५७ ॥

सतीनो वास्तूकश्चुच्छुश्चिल्ली मूलकपोतिका ॥
मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते ॥ ५८ ॥

उक्तेषु प्रधानतमं शाकमाह—सतीन इत्यादि । सतीनो वर्तुलकलायः । चुच्छु 'चेउ' इति लोके । चिल्ली क्षेत्रवास्तूकः । मण्डूकपर्णी 'मणिमणीतिलोके, ब्राह्मीति डल्हणः । जीवन्ती 'स्वर्णनाड़' इति चक्रः, डल्हणस्तु जीवन्ती जीवा तण्डलीयसदृशीत्याचष्टे ॥ ५८ ॥

धान्येषु मांसेषु फलेषु चैव
शाकेषु चानुक्तमिहाप्रमेयात् ॥
आस्वादतो भूतगुणैर्गृहीत्वा
तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ५९ ॥

शाकं हिनस्ति वपुरस्थि निहन्ति नेत्रं
वर्णं विनाशयति शुक्रमथासृजं च ॥
ओजःक्षयं प्रकुरुते पलितं त्वकाले
हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥६०॥

शाकेषु सर्वे निवसन्ति रोगा
रोगो हि देहस्य विनाशहेतुः ॥
तस्माद्बुधैः शाकविवर्जनं हि
कार्यं तथाम्लेषु स एव दोषः ॥ ६१ ॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे शाकवर्गो नाम तृतीयो वर्गः समाप्तः ॥

द्रव्याणामानन्त्यादनुक्तद्रव्यगुणज्ञानोपायमाह—धान्येष्वित्यादि । फलानि वक्ष्यमाणानि । चकाराद्द्रवद्रव्यकृतान्नादीनां समुच्चयः । इहेति शास्त्रे । अप्रमेयादिति भावपरो निर्देशः, तेनानन्त्यादित्यर्थः । अयं चावचने हेतुः । अत्रैवार्थे चरकोऽप्याह, —"अन्नपानैकदेशोऽयमुक्तः प्रायोपयोगिकः । द्रव्याणि न हि निर्देष्टुं शक्यं कार्त्स्न्येन नामभिः"—इति । अप्रमोहादिति च क्वचित् पाठः । अन्ये तु अनुक्तमपि प्रमादादिति पठन्ति । तन्न, प्रमादोऽनवधानं मिथ्याज्ञानमिति यावत्, तत्तु मुनीनां नास्त्येवेति । आस्वादत इति रसतः । रसानां मधुरादीनां ये गुणाः शीतोष्णत्वादयः यानि वा कर्माणि वातादिहरणह्लादनादीनि तैस्तैर्गुणकर्मभिस्तत्तदनुक्तद्रव्यमादिशेत् ब्रूयादित्यर्थः । भूतगुणैश्चेति चकारात् पार्थिवादिद्रव्यारम्भकाणां भूतानां ये गुणाः स्थूलसान्द्रत्वादयस्तैर्द्रव्यस्य पार्थिवादिकमवधार्य पार्थिवादिद्रव्यप्रतिबद्धैर्गुणकर्मभिरेव तत्तदनुक्तं द्रव्यमादिशेदित्यर्थः । तत्तद्भूतगुणग्रहणं च किंचित् प्रत्यक्षतः, किंचिदुपयुक्तवचनतः, किंचिदुपयोगतश्चेति ज्ञेयम् ॥ ५९ ॥ ६० ॥

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां शाकवर्गो नाम तृतीयो वर्गः समाप्तः ॥

---

सैन्धवं दीपनं हृद्यं चक्षुष्यं रोचनं लघु ॥
स्निग्धं वृष्यं च मधुरं शीतं दोषघ्नमुत्तमम् ॥ १ ॥

सैन्धवादीनां व्यञ्जनसंस्कारकत्वात् शाकानन्तरं लवणादिवर्गमाह, अत्रापि लवणेषु सैन्धवस्य श्रेष्ठत्वात् प्रथमं तद्गुणमाह—सैन्धवमित्यादि । अत्र मधुरमित्यनन्तरं चकारो योज्यः; तेनेषन्मधुरत्वं बोध्यते, चशब्दसमुच्चितत्वात् । दोषघ्नमिति त्रिदोषहरम् । उत्तममिति लवणेषु श्रेष्ठम् । उक्तं च,—"त्रिदोषघ्नं समधुरं सैन्धवं लवणोत्तमम्"—इति ॥ १ ॥

सामुद्रं मधुरं पाके नात्युष्णमविदाहि च ॥
भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ २ ॥

सामुद्रगुणानाह—सामुद्रमित्यादि । दक्षिणसमुद्रे भवतीति सामुद्रं, करकचलवणम् ॥ २ ॥

**विडं सक्षारतीक्ष्णोष्णं सूक्ष्मं दीपनरोचनम् ॥**
**शूलहृद्रोगशमनं रूक्षं वातानुलोमनम् ॥ ३ ॥**

विडगुणानाह—विडमित्यादि । विडं कृत्रिमं स्वनामख्यातम् ॥ ३ ॥

**सौवर्चलं तु वीर्योष्णं विशदं कटुकं लघु ॥**
**गुल्मशूलविबन्धघ्नं हृद्यं सुरभि दीपनम् ॥ ४ ॥**
**सौवर्चलगुणाः कृष्णलवणे गन्धवर्जिताः ॥**

सौवर्चलगुणानाह—सौवर्चलमित्यादि । सौवर्चलं प्रसिद्धम् ॥ ४ ॥—

**सतिक्तं कटु सक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ॥ ५ ॥**

औद्भिदगुणानाह—सतिक्तमित्यादि । भुवमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्यरश्मिभिर्विह्नितापाद्वा क्वथनाद्यल्लवणमुत्पद्यते तदौद्भिदमिति निबन्धसंग्रहः, चक्रस्तु ऊषरदेशोद्भवमुत्कारिकालवणमौद्भिदलवणमित्याह, अन्ये तु पाक्यलवणमौद्भिदमित्याहुः॥५॥

**रौमकं तीक्ष्णमुष्णं च व्यवायि कटुपाकि च ॥**
**वातघ्नं लघु विष्यन्दि सूक्ष्मं विड्भेदि मूत्रलम् ॥ ६ ॥**

रौमकगुणानाह—रौमकमित्यादि । रुमा नाम नदी तद्भवं रौमकं, साम्भरिदेशोत्थं लवणं गडलवणमिति अन्ये । विष्यन्दीति कफस्रावकारकमिति डल्हणः । सूक्ष्मस्रोतोऽनुसारित्वात् सूक्ष्मम् ॥ ६ ॥

**दीपनं पाचनं भेदि लवणं गुटिकाह्वयम् ॥**
**कफवातक्रिमिघ्नं च लेखनं पित्तकोपनम् ॥ ७ ॥**

पाक्यलवणविशेषगुडिकालवणगुणानाह—दीपनमित्यादि । पाकादतिकठिनीभावेन गुटिकाकारं लवणं गुटिकालवणम् ॥ ७ ॥

**क्षारास्तु दीपनाः सर्वे रक्तपित्तकराः सराः ॥**
**गुल्मार्शोग्रहणीदोषशर्कराश्मविनाशनाः ॥ ८ ॥**

क्षाराणामपि लवणरसत्वात् क्षारगुणानप्यत्रैवाह—क्षारा इत्यादि ॥ ८ ॥

**ज्ञेयौ वह्निसमौ क्षारौ सर्जिकायवशूकजौ ॥**
**शुक्रश्लेष्मविबन्धार्शोगुल्मप्लीहविनाशनौ ॥ ९ ॥**
**अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणक्षार उच्यते ॥ १० ॥**

क्षारविशेषगुणानाह—ज्ञेयावित्यादि ॥ ९ ॥ १० ॥

आर्द्रकं रोचनं हृद्यं कटूष्णं वृष्यमेव च ॥
कफानिलहरं स्वर्यं विबन्धानाहशूलनुत् ॥ ११ ॥
शुण्ठी तु कफवातघ्नी सस्नेहा लघुदीपनी ॥
वृष्योष्णा रोचनी हृद्या विपाके मधुरा कटुः ॥ १२ ॥

आर्द्रकादीनामपि व्यञ्जनसंस्कारकत्वादत्रैव तद्गुणमाह,—आर्द्रकमित्यादि॥११॥१२॥

पिप्पल्यार्द्रा स्वादुशीता गुर्वी श्लेष्मप्रकोपणी ॥
सा शुष्का मधुरा पाके वृष्या पित्तप्रसादनी ॥ १३ ॥
स्निग्धोष्णा दीपनी वातश्लेष्मनुच्छ्वासनाशिनी ॥

पिप्पलीगुणानाह—पिप्पल्यार्द्रेत्यादि । श्लेष्मप्रकोपणीति स्ववर्गापेक्षया; न श्लेष्मशम-
नीत्यर्थ इति डल्हणः, मधुरपाकितया पित्तं प्रसादयतीति चक्रः । अन्ये तु पित्ताविरो-
धिनीति पठन्ति, ईषत्पित्तविरोधिनीति च व्याचक्षते । केचित्तु पित्तकोपनीति पठन्ति,
व्याख्यानयन्ति च,—"सा पित्तशमनी पूर्वं दर्शिता वीर्यवादिना । शास्त्रकारेण नि-
र्दिष्टा सा तु पित्तप्रकोपणी ॥ तच्चार्द्रा पित्तशमनी शुष्का पित्तप्रकोपणी"—इति ॥१३॥—

मरिचं लघु तीक्ष्णोष्णं रूक्षं रोचनदीपनम् ॥ १४ ॥
रसे पाके च कटुकं कफघ्नं पित्तकोपनम् ॥
स्वादु पाक्यार्द्रमरिचं गुरु श्लेष्मप्रकोपि च ॥ १५ ॥
नात्युष्णं नातिशीतं च वीर्यतो मरिचं सितम् ॥
गुणवन्मरिचेभ्यश्च चक्षुष्यं च विशेषतः ॥ १६ ॥

मरिचगुणानाह—मरिचमित्यादि । मरिचमिति शुष्कमरिचमित्यर्थः । श्लेष्मप्रको-
पीति श्लेष्मणोऽन्यतश्च तस्य प्रकोपणम् कटुतीक्ष्णोष्णत्वात् करोतीति चक्रः । ये तु
चयमपि श्लेष्मणो वदन्ति तदनुभवविरुद्धम् । डल्हणस्तु श्लेष्मप्रसेकि चेति पठति ।
श्वेतमरिचगुणानाह—नात्युष्णमित्यादि । सितं मरिचं शोभाञ्जनबीजम्; अन्ये तु
मरिचमेव शुक्लं वदन्ति ॥ १४—१६ ॥

हिङ्गु तीक्ष्णं कटुरसं शूलाजीर्णविबन्धनुत् ॥
लघूष्णं पाचनं स्निग्धं दीपनं कफवातजित् ॥ १७ ॥
जीरकं रुचिकृत्सर्वं गन्धाढ्यं कफवातजित् ॥
तीक्ष्णोष्णं कटुकं पाके कटु पित्ताग्निवर्धनम् ॥ १८ ॥

यमानी कृष्णजीरश्च ज्ञेया जीरकवद्गुणैः ॥
धन्याकं कासतृट्छर्दिशमनं चक्षुषोर्हितम् ॥ १९ ॥
कषायतिक्तं मधुरं हृद्यं रोचनदीपनम् ॥

जीरकगुणानाह—जीरकमित्यादि । सर्वमिति शुक्लपीतभेदाज्जीरकद्वयमिति चक्रः। कृष्णजीरः कारवी ॥ १७—१९ ॥—

लसुनः क्षारमधुरः पत्रे मधुरपिच्छलः ॥ २० ॥
मध्ये कन्दे तु तीक्ष्णोष्णः कटुपाकरसः सरः ॥
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो दीपनपाचनः ॥ २१ ॥
भग्नसन्धानकृद्बल्यो रक्तपित्तप्रकोपणः ॥
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ॥ २२ ॥
सहिक्कापीनसश्वासकासान् हन्ति रसायनः ॥
पलाण्डुर्मधुरो वृष्यः कटुः स्निग्धोऽनिलापहः ॥ २३ ॥
बल्यः पित्ताविरोधी च कफकृद्रोचनो गुरुः ॥

पलाण्डुगुणानाह—पलाण्डुरित्यादि । अनिलापहो वातप्रशमकः । कफकृदिति नात्यर्थं कफकरः । पित्ताविरोधीति किंचित्पित्तकर इत्यर्थः । यदाह,—"नात्युष्णवीर्योऽनिलहा कटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च । बलावहः पित्तकरोऽथ किंचित् पलाण्डुरग्निं परिवर्धयेच्च—" इति । पलाण्डुः 'पेयाज' इति ख्यातः ॥ २०—२३ ॥—

ग्राही गृञ्जनकस्तीक्ष्णो ग्रहण्यर्शोविकारनुत् ॥ २४ ॥

गृञ्जनकगुणानाह—ग्राहीत्यादि । गृञ्जनकः 'गाजर' इति नाम्ना मगधादौ ख्यातः ॥२४॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे
लवणादिवर्गो नाम चतुर्थो वर्गः ।

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां लवणादिवर्गो नाम चतुर्थो वर्गः ।

---

कषायानुरसं नातिपित्तलं दाडिमं स्मृतम् ॥
दीपनीयं रुचिकरं हृद्यं वर्चोविबन्धनम् ॥ १ ॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ॥
त्रिदोषघ्नं तु मधुरमम्लं वातकफापहम् ॥ २ ॥

यद्यपि शाकेषु फलपाठाच्छाकानन्तरमेव फलगुणाभिधानं युक्तं; तथापि शाकसं-
स्कारत्वेनान्तरङ्गत्वात्, अल्पवक्तव्यत्वाच्च सूचीकटाहन्यायेन प्रथमं लवणादिवर्गमभि-
धाय, अनन्तरं फलगुणानाह—कषायानुरसमित्यादि। नातिपित्तलमिति योग्यतया अ-
म्लदाडिममेवैवंगुणं बोध्यं, ईषत्पित्तकरमित्यर्थः। चरकेऽपि "सर्वं पित्तलमम्लमन्यत्र
दाडिमामलकात्"—(च. सू. स्था. अ. २६) इत्यत्र भट्टारहरिचन्द्रेण दाडिमग्रहणं
निरस्य "अन्यत्रामलकात्"—इत्येव पाठः पुरस्कृत इति। चन्द्रिकाकारेणाप्यनुमतमे-
तत्। चक्रेणापि नातिपित्तलमित्येव पाठोऽनुमन्यते। किंतु अस्मिन् पक्षे—"अम्लं
पित्तकरं प्रायो दाडिमामलकादृते"—इति (वा. सू. स्था. अ. १०) वाग्भटविरोधो
दुष्परिहर इत्यवधेयम्। अन्ये तु नापि पित्तलमिति पठित्वा, अम्लं दाडिमं पित्तं न
करोति न च शमयतीति च व्याचक्षते। चरकेऽपि दाडिमगुणे कफपित्ताविरोधीत्यु-
क्तम्। तत्राम्लं दाडिमं पित्ताविरोधि, मधुरं तु कफाविरोधीत्याहुः ॥ १ ॥ २ ॥

**प्राचीनामलकं चैव दोषघ्नं गरहारि च ॥**

प्राचीनामलकगुणानाह—प्राचीनामलकमित्यादि। प्राचीनामलकं प्रसिद्धम् ॥—

**कर्कन्धुकोलबदरमामं पित्तकफावहम् ॥ ३ ॥**
**पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम् ॥**
**तच्छुष्कं कफवातघ्नं न च पित्ते विरुध्यते ॥ ४ ॥**
**पुराणं तृट्प्रशमनं श्रमघ्नं लघु दीपनम् ॥**

कर्कन्ध्वादीनां गुणानाह—कर्कन्ध्वित्यादि। कर्कन्धुरल्पा सृगालकोलिः, कोलं
मध्यप्रमाणबदरम्, बदरं महद्बदरम्। अम्लमिति पाठेऽप्याममेव, आमावस्थायामेव ते-
षामम्लत्वात्। पित्तकफावहमिति पित्तकफजनकम्। पुराणमिति पक्वबदरचूर्णं, तदीयशु-
ण्ठकमिति चक्रः ॥ ३ ॥ ४ ॥—

**सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित् ॥ ५ ॥**

सौवीरगुणानाह—सौवीरमित्यादि। सौवीराख्यं बदरं महत्तमं आमपक्वावस्थासु
मधुरमिति चन्द्रिकाकारः ॥ ५ ॥

**आम्रं बालं रक्तपित्तकरं मध्यं तु पित्तलम् ॥**
**पक्वं वर्णकरं रुच्यं मांसशुक्रबलप्रदम् ॥ ६ ॥**
**पित्ताविरोधि वातघ्नं हृद्यं गुर्वनुलोमनम् ॥**
**आम्रपेशी कषायाम्ला भेदनी कफवातजित् ॥ ७ ॥**

आम्रस्यावस्थाभेदेन गुणभेदमाह—आम्रमित्यादि। अत्र भट्टारहरिचन्द्रेण चरके
"रक्तपित्तकरं बालम्—" इति पाठं निरस्य "वातपित्तकरं बालम्—" इत्येव पाठः

पुरस्कृतः, चक्रेणाप्यनुमतमेतत्, युक्तं चैतत्, सुश्रुतेऽपि "पित्तमारुतकृद्बालम्—" इत्युक्तत्वात् । अन्ये तु वाग्भटे "वातपित्तासकृद्बालम्—" इति दर्शनात् रक्तपित्तकरत्वं चास्य न विरुध्यत इति ज्ञेयम् । आम्रपेशी शुष्काम्रम् ॥ ६ ॥ ७ ॥

**आम्रातकं तर्पणं च बल्यं मधुरबृंहणम् ॥**
**स्नेहनं श्लेष्मलं शीतं वृष्यं विष्टभ्य जीर्यति ॥ ८ ॥**

आम्रातकगुणानाह—आम्रातकमित्यादि । आम्रातकमाम्रफलसदृशमिति चन्द्रिका । 'आमडा' इति ख्यातमिति चक्रः । तद्द्विविधं मधुरमम्लं च । तत्र मधुरस्यैवायं गुणश्चरकेणोक्तः, अम्लाम्रातकगुणस्य पश्चादुक्तत्वात् ॥ ८ ॥

**लकुचं गुरु विष्टम्भि त्रिदोषं शुक्रदूषणम् ॥**

लकुचगुणानाह—लकुचमित्यादि । लकुचो डहुः ॥—

**करमर्द तृषाहारि रुच्यम्लपित्तकारकम् ॥ ९ ॥**

करमर्दगुणानाह—करमर्दमित्यादि । करमर्द कण्टकीफलमिति चन्द्रिका; तद्द्विविधं महदल्पं च; तत्र महत् प्रायशो ग्रामभवमम्लं च, अल्पा तु करमर्दी वनजा मधुराम्लफला इति च व्याचष्टे ॥ ९ ॥

**वातपित्तहरं वृष्यं पियालं गुरु शीतलम् ॥**

पियालगुणानाह—वातेत्यादि । पियालो मगधे स्वनामख्यातः ॥—

**भव्यं स्वादु कषायाम्लं हृद्यमास्यविशोधनम् ॥ १० ॥**

भव्यगुणानाह—भव्यमित्यादि । भव्यं तालफलोपमं केवलवल्कलसंहतिमात्रमिति चन्द्रिका भानुमती च; अन्ये तु कर्मरङ्गफलं भव्यमाहुः ॥ १० ॥—

**पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीतलम् ॥**
**अम्लवेतसमत्यम्लं तीक्ष्णं स्निग्धं च दीपनम् ॥ ११ ॥**

अम्लवेतसगुणानाह—अम्लवेतसमित्यादि । अम्लवेतसं 'थैकल' इति उत्तरदेशे ख्यातम् ॥ ११ ॥

**वातापहं तिन्तिडीकमामं पित्तबलाशकृत् ॥**
**ग्राह्युष्णं दीपनं रुच्यं संपक्वं कफवातनुत् ॥ १२ ॥**

तिन्तिडीकगुणानाह—वातापहमित्यादि । तिन्तिडीकं महार्द्रकं, न तु तिन्तिडीफलं, चरके सुश्रुते च पृथगेवाम्लिकायाः फलमित्यादिना तद्गुणपाठात्; पुरुषोत्तमस्तु तिन्तिडीफलमम्लिकायाः फलमिति भ्रान्त्या महार्द्रकगुणं पृथगेव पठति, तत्पुनरविरोधोज्जृम्भितम् ॥ १२ ॥

अम्लिकायाः फलं पक्वं तस्माचाल्पतरं गुणैः ॥

अम्लिकागुणानाह—अम्लिकाया इत्यादि । अम्लिकायाः फलं तिन्तिडीफलम् ॥—

कषायविशदत्वाच्च सौगन्ध्याच्च रुचिप्रदम् ॥ १३ ॥
अवदंशक्षमं रूक्षं वातलं लवलीफलम् ॥

लवलीफलगुणानाह—कषायेत्यादि ।—अवदंशक्षममिति लवलीफलं प्राश्य द्रव्यान्तरे रुचिर्भवतीत्यर्थः ॥ १३ ॥—

जम्बीरं वातकफनुद्गुरु पित्तप्रकोपणम् ॥ १४ ॥
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥
नागरङ्गं दुर्जरं च गुरु वातविनाशनम् ॥ १५ ॥
फलं वेत्रस्य वातघ्नमम्लपित्तविनाशकृत् ॥
मातुलुङ्गफलं हृद्यमम्लं लघ्वग्निदीपनम् ॥ १६ ॥
श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥
बीजपूरस्य तिक्ता त्वक् दुर्जरा कफवातहृत् ॥ १७ ॥
तन्मांसं स्वादु शीतं च गुरु मारुतपित्तजित् ॥
केशरं तु लघु ग्राहि गुल्मार्शोघ्नं हि दीपनम् ॥ १८ ॥
मेध्यं शूलानिलच्छर्दिकफारोचकनाशनम् ॥

मातुलुङ्गफलस्य प्रत्यवयवगुणं निर्दिशन्नाह—बीजपूरस्येत्यादि । बीजपूरस्येति मातुलुङ्गस्य । कफवातहृदिति कफवातनाशिनी, "तिक्ता त्वग्दुर्जरा तस्य वातक्रिमिकफापहा—" इत्युक्तेः । मांसमिति त्वक्केशरमध्यभागः । मेध्यं मेधाहितं, प्रभावात् ॥ १४–१८ ॥—

एवंप्रकारा विज्ञेया वृष्या च मधुकुक्कुटी ॥ १९ ॥

मधुकुक्कुटीगुणानाह—एवमित्यादि । मधुकुक्कुटी 'मखुर' इति ख्याता । मातुलुङ्गापेक्षया महाप्रमाणा बहुमांसाल्पकेशरा ॥ १९ ॥

कपित्थमामं कण्ठघ्नं विषघ्नं ग्राहि वातलम् ॥
मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ॥
तदेव सिद्धं दोषघ्नं विषघ्नं ग्राहि गुर्वपि ॥ २० ॥

कपित्थगुणानाह—कपित्थेत्यादि । तदेवेति कपित्थं; सिद्धमिति कालवशात् पक्वम् ॥ २० ॥

जाम्बवं वातलं ग्राहि रूक्षं पित्तकफापहम् ॥

जाम्बवगुणनाह—जाम्बवमित्यादि । जम्बूस्त्रिविधा—राजजम्बूर्महाफला, काक-

जम्बूर्वनजम्बूरिति ख्याता, भूमिजम्बूरल्पफला; अत्र पुनरविशेषात् जाम्बवशब्देन सर्वजम्बूफलमुच्यते ॥—

## तिन्दुकं तुवरं स्वादु गुरु पित्तकफापहम् ॥ २१ ॥

तिन्दुकगुणानाह—तिन्दुकमित्यादि । तिन्दुकं 'गाव' इति ख्यातं, 'केन्दु' इति केचित् । तुवरं कषायरसं, कषायरसत्वं चास्य आमावस्थायां, स्वादुरसश्चास्य पक्वावस्थायामिति विज्ञेयम् । पित्तकफापहत्वं चास्यामपक्वसाधारणो गुणः । उक्तं च—"आमं कषायं संग्राहि तिन्दुकं वातकोपनम् । विपाके गुरु संपक्वं मधुरं कफपित्तजित्"—इति । अत्रामस्य वातकोपित्वेन पित्तकफहन्तृत्वमर्थलभ्यमेव ॥ २१ ॥

## स्निग्धं स्वादु कषायं च राजादनफलं गुरु ॥

राजादनफलगुणानाह—स्निग्धमित्यादि । राजादनफलं खर्जूरसदृशं, क्षीरिकायाः फलमिति चन्द्रिका ॥—

## कषायमधुरं रूक्षं तोदनं कफवातजित् ॥ २२ ॥
## अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्धनम् ॥

तोदनगुणानाह—कषायेत्यादि । तोदनं वामप्रियं फलं, वारणाम्लिकेति दाक्षिणात्येषु ख्यातम् । ननु, पित्ताग्निवर्धनमित्युभयोपादानं न युज्यते, सुश्रुते "न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते—" (सु. सू. स्था. अ. १५) इत्यादिना पित्ताग्न्योरभेदस्योक्तत्वात्; अनुमानं च पित्ताग्न्योरभेदसाधकं, यथा–अग्नित्वेन व्यवह्रियमाण तेजः पित्तावयवरूपं, पित्तवर्धनपित्तक्षपणैर्वृद्धिह्रासयोगित्वात्, प्रदेशान्तरस्थपित्तावयववदिति; आगमा अपि अग्निपित्तयोरभेदसाधका यथा,—"कानकं राजतं ताम्रं कृष्णायस्त्रपुसीसकम् । चिरस्थानाद्विलीयन्ते पित्ततेजःप्रतापनात्"—इति; तथा,—"षष्ठी कला पित्तधरा" इत्यादिना अग्न्याधारतया ग्रहण्युक्ता; तथा भोजेऽपि, "तस्मात् तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान्"—इति । अत्रोच्यते, वह्निपित्तयोः पारमार्थिके हि अभेदे तीक्ष्णः पित्तेनाग्निरिति कार्यकारणभावो न स्यात्, तथा "कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् । आप्लावयद्धन्त्यनलम्"—इति चरकवचनं च विरुध्यते; तथा "पित्तशमकमपि घृतमग्निमेधे करोति"—इत्युक्तमसङ्गतं स्यात्; तथा "समदोषः समाग्निश्च"—इति वचनेऽपि पौनरुक्त्यं दुष्परिहरं स्यात्; अभेदसाधकानुमाने चासिद्धो हेतुः, घृतस्य पित्तशमकस्यापि अग्निवर्धकत्वात्; तथा कट्वजीर्णविदाह्यम्लस्य च पित्तजननावान्तरव्यापारस्याग्न्युपघातकत्वात् । यदप्यभेदसाधकं "पित्ततेजः प्रतापनात्—" इति वचनं तथा "पित्तोष्मा यः स पक्तिमान्—" इति च तदपि पित्ताद्भिन्नस्य तदवयवस्य तेजसोऽग्नित्वं वदति; तस्मात् अवयवावयविरूपेणाग्निपित्तयोर्भेदो विद्यत एव; सुश्रुतेन तु अवयवावयविनोरभेद एव विवक्षित इति न विरोधः । अभेदाश्रयणं च पित्तवर्धनैः प्रायो वर्धनमग्नेस्तच्छमकैश्च प्रायः क्षपणमग्नेरिति प्रतिपादना-

प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् ॥

इदानीं पारिशेष्याद्दन्तकाष्ठादिगुणमाह—दन्तकाष्ठमित्यादि । आदिशब्दात् करवीरादीनां ग्रहणम् । तदुक्तं,—"करञ्जकरवीरार्कमालतीककुभाशनाः । शस्यन्ते दन्तपवने ये चाप्येवंविधा द्रुमाः—" इति ( च० सू० स्था० अ० ५ ) ॥ ईतिरागामिदुर्दैवम् । गुप्तिः पिशाचादिभ्यो रक्षा ॥ १२–२६ ॥—

निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ॥ २७ ॥
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ॥ २८ ॥
सुखायुषी पराकुर्यात्कालरात्रिरिवापरा ॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ २९ ॥
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥
आस्या वर्णबलश्लेष्मसौकुमार्यकरी सुखा ॥ ३० ॥

निद्राविषयमाह—निद्रेत्यादि । न च जीवितं मरणमित्यर्थः । आसीनस्य प्रचलायितं घूर्णितमित्यर्थः ॥ २७–३० ॥

तालवृन्तोद्भवं वातं त्रिदोषशमनं विदुः ॥
वंशव्यजनजः सोष्णो वातपित्तप्रकोपणः ॥ ३१ ॥
चामरो वस्त्रवातश्च मायूरो नेत्रजस्तथा ॥
एते दोषजिता वाताः स्निग्धा हृद्याः सुपूजिताः ॥ ३२ ॥
निवातमारोग्यकरं सुखवातं श्रमापहम् ॥
प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत् ॥ ३३ ॥
प्राग्वायुरुष्णोऽभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् ॥
सन्निपातज्वरं श्वासमामवातं च कोपयेत् ॥ ३४ ॥
पश्चिमः शिशिरो हन्ति मूर्छां दाहं तृषां विषम् ॥
प्राग्गुणो दक्षिणः प्रोक्त उत्तरः पश्चिमानुगः ॥ ३५ ॥
विश्वग्वायुरनायुष्यः प्राणिनां नैकरोगकृत् ॥

दिग्भेदेन वायुगुणमाह—प्रागित्यादि । प्राग्गुण इति प्राग्वातगुणः ॥ ३१–३५ ॥—

धूमः पित्तानिलौ कुर्यादवश्यायः कफानिलौ ॥ ३६ ॥

अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ॥
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपणः ॥ ३७ ॥
आतपः कटुको रूक्षश्छाया मधुरशीतला ॥
ज्योत्स्ना कषायमधुरा दाहासृक्पित्तनाशिनी ॥ ३८ ॥
तमो भयावहं तिक्तं कुज्झटिः कफपित्तला ॥
शीताभिष्यन्दिनी वृष्टिस्तन्द्रानिद्राबलप्रदा ॥ ३९ ॥
देशो धन्वा मरुत्पित्तकरो रूक्षोष्ण एव च ॥
आनूपस्तु हिमः स्निग्धो वातश्लेष्मकरो गुरुः ॥ ४० ॥
साधारणः समगुणः सर्वरोगापहः स्मृतः ॥
हेमन्तः शीतलः स्निग्धः स्वादुरग्नेश्च वृद्धिकृत् ॥ ४१ ॥
शिशिरः शीतलः किंचिद्रुक्षस्तीक्ष्णोऽनिलाग्निकृत् ॥
वसन्तस्तुवरः सोष्णः कफव्याधिसमीरणः ॥ ४२ ॥
ग्रीष्म उष्णोऽतिरूक्षश्च कटुको बलहानिकृत् ॥
वर्षाः शीता विदाहिन्यो वह्निमान्द्यानिलार्तिदाः ॥४३॥
शरत्पित्तकफप्राया स्निग्धोष्णा शस्यवृद्धिकृत् ॥
पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ॥ ४४ ॥
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥
सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् ॥ ४५ ॥
घृतमुष्णोदकं चैव सद्यःप्राणकराणि षट् ॥
सन्तताध्ययनं वादः परतन्त्रावलोकनम् ॥ ४६ ॥
तद्विद्याचार्यसेवा च बुद्धिमेधाकरो गणः ॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम् ॥
ब्रह्मचर्यमहिंसा च साहसानां च वर्जनम् ॥ ४७ ॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे
मिश्रकवर्गो नाम चतुर्दशो वर्गः समाप्तः ॥

आतपादीनां गुणमाह—आतप इत्यादि । आतपादीनां च कटुत्वादिकं यदुक्तं तत् कटुरसादितुल्यकार्यकर्तृत्वेन ज्ञेयम् ॥ ३६–४७ ॥

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां मिश्रकवर्गो नाम पञ्चदशो वर्गः समाप्तः ।

**तन्त्राणां सारमाकृष्य द्रव्याणां गुणसंग्रहः ॥**
**भिषजामुपकाराय रचितश्चक्रपाणिना ॥ ४८ ॥**

**इति वैद्यमहामहोपाध्यायश्रीचक्रपाणिदत्तविरचितो द्रव्यगुणसंग्रहः समाप्तः ॥**

इदानीमस्य संग्रहग्रन्थस्य उपादेयतां दर्शयितुमाह—तन्त्राणामित्यादि ॥ २५ ॥

आसीत् सभायां शिखरेश्वरस्य लब्धप्रतिष्ठः किल सारसेनः[1] ।
वाणीविलासं कविसार्वभौमं विजित्य यः प्राप यशो दुरापम् ॥

काकुत्स्थसेनस्तनयस्ततोऽभूत् तस्यापि लक्ष्मीधरसेननामा ।
तस्मादभूदुद्धरणस्तनूजस्तस्याप्यनन्तस्तनयोऽथ जज्ञे ॥

योऽन्तरङ्ग[2]पदवीं दुरवापां छत्रमप्यतुलकीर्तिरवाप ।
गौडभूमिपतेर्वार्क्साहात्तत्सुतस्य कृतिनः कृतिरेषा ॥

कृतिर्ममैषाखिलतन्त्रतत्त्वविचिकित्सकानोपकरोति यद्यपि ॥
तथापि नव्यान् भिषगल्पदश्वनः परः सहसानुकूलयिष्यति ॥

इति श्रीशिवदाससेनविरचिता द्रव्यगुणसंग्रहटीका समाप्ता ।

---

१ 'साहिसेनः' इति पाठान्तरम् ।
२ विद्याकुलसंपन्नो हि भिषगन्तरङ्ग इत्युच्यते ।

र्थम् । पित्ततेजोरूपतायां च वह्नेस्तेजोविपरीतपित्तद्रवांशवर्धकाजीर्णविदाह्यम्लादिभिर्व्य-म्लीभूतद्रवपित्तजननादग्नेर्निर्वापणं युक्तमेवेति ॥ २२ ॥—

**अनुपाकिफलं स्वादु वातपित्तविनाशनम् ॥ २३ ॥**

अनुपाकिफलगुणानाह—अनुपाकीति । —'अनुया' इति ख्यातम् ॥ २३ ॥

**क्षीरिवृक्षफलं विद्याद्गुरु विष्टम्भि शीतलम् ॥**
**कषायमधुरं साम्लं नातिमारुतकोपनम् ॥ २४ ॥**
**बाकुलं मधुरं स्निग्धं कषायं विशदं च तत् ॥**
**स्थिरीकरं च दन्तानां संग्राहि फलमिष्यते ॥ २५ ॥**

क्षीरिवृक्षफलगुणानाह—क्षीरीत्यादि । क्षीरिवृक्षा न्यग्रोधोदुम्बराश्वत्थप्लक्षा-दयः ॥ २४ ॥ २५ ॥

**परूषकं समधुरं कषायानुरसं लघु ॥**
**वातघ्नं पित्तजननमत्यम्लं तदुदाहृतम् ॥ २६ ॥**
**पक्वं समधुरं तच्च वातपित्तनिबर्हणम् ॥**
**कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् ॥ २७ ॥**

आमपक्वभेदेन परूषकस्य गुणमाह—परूषकमित्यादि । अयं चामपरूषकगुणः, पक्वस्य वक्ष्यमाणत्वात् । परूषकं स्वनामख्यातम् । तदिति परूषकम् ॥ २६ ॥ २७ ॥

**कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम् ॥**
**तदेव विद्यात्संपक्वं मधुरानुरसं गुरु ॥ २८ ॥**
**विदाहि विष्टम्भकरं दोषकृत् पूतिमारुतम् ॥**

बिल्वस्याप्यामपक्वभेदेन गुणमाह—कफानिलहरमित्यादि । बालबिल्वं बिल्वशलाटु । अत्र कफानिलहरमित्यारभ्य उदाहृतमित्यन्तश्च प्रथमावस्थबिल्वगुणः, तदेवेत्याद्यर्ध-श्लोकेन मध्यावस्थबिल्वगुणः, विदाहीत्यादिः पूतिमारुतमित्यन्तः स्वादुपक्वबिल्वगुण इति । संपक्वमिति परिणतं मध्यावस्थमित्यर्थः, युक्तं चैतत् सुपक्वस्य हि मधुरानुरसता न युज्यते, यतः पक्वस्य मधुर एव रसो नत्वन्यो रस इति । पूतिमारुतमिति पूतिशब्दो-ऽयं सुगन्धिवचनः, यथा—पूतिः खट्वासः, यथा—वनजा मधुकुक्कुटी पूतिपुष्पा, सुगन्धि-पुष्पेत्यर्थः; तेन पूतिः सुगन्धिर्मारुतो यस्य तत्तथा । एतच्च विशेषणं सुपक्वावस्थाप्र-दर्शनपरम्, यतः सुपक्वबिल्वसंसर्गी बाह्यपवनः सुगन्धिर्भवतीति । तदेव दोषत्रयकरं प्रभावात् । अन्ये तु पूतिमारुतं दुर्गन्धिकुक्षिवातकरमित्याचक्षते । तन्न, सम्यगप्रतीतेः, मध्यबिल्वगुणानिर्देशाच्चेति; नहि य एव बालबिल्वस्य गुणः स एव मध्यस्यापि युज्यते

इति चन्द्रिका । चक्रस्तु तदेव विद्यादित्यादिः पूतिमारुतमित्यन्तः पक्वबिल्वगुण इत्याह; यतश्चरकेऽपि "दुर्जरं बिल्वसिद्धं तु—" इत्यादिना द्विविधमेव; वाग्भटेऽप्येवम् ॥२८॥—

**द्राक्षा तु मधुरा स्निग्धा शीता वृष्यानुलोमनी ॥ २९ ॥**
**रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥**
**गोस्तनी या गुरुर्वृष्या द्राक्षा सा वातपित्तनुत् ॥ ३० ॥**

द्राक्षागुणानाह—द्राक्षेत्यादि । अनुलोमनी सरा, मलभेदिनीति यावत् । गोस्तनी बृहत्प्रमाणद्राक्षा ॥ २९ ॥ ३० ॥

**केश्यं रसायनं मेध्यं काश्मर्याः फलमुच्यते ॥**

काश्मरीफलगुणानाह—केश्यमित्यादि । काश्मरी गम्भारी ॥—

**खर्जूरं मधुरं वृष्यं स्निग्धं शोणितपित्तजित् ॥ ३१ ॥**
**क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥**

खर्जूरगुणानाह—खर्जूरमित्यादि । खर्जूरं द्विविधं महाप्रमाणं स्वल्पप्रमाणं च; तत्राद्यं पिण्डखर्जूरं पारसीयदेशोद्भवं, स्वल्पप्रमाणं च विट्खर्जूरम् ॥ ३१ ॥—

**मधूकस्य फलं पक्वं वातपित्तप्रणाशनम् ॥ ३२ ॥**
**तस्य पुष्पं बृंहणीयमहृद्यं गुरु शीतलम् ॥**

मधूकफलपुष्पगुणानाह—मधुकेत्यादि । मधूकस्य पुष्पाणां फलवदुपयोगात् तत्समानगुणत्वाच्चात्राभिधानं बोध्यम् । अहृद्यमिति मदजनकत्वात् ॥ ३२ ॥—

**नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलम् ॥ ३३ ॥**
**बलमांसकरं हृद्यं बृंहणं बस्तिशोधनम् ॥**
**तालं स्वादुरसं पक्वं गुरु पित्तविनाशनम् ॥ ३४ ॥**
**तद्बीजं स्वादुपाकं तु मूत्रलं वातपित्तजित् ॥**

तालफलगुणानाह—तालमित्यादि । तद्बीजमिति तालबीजम् ॥ ३३ ॥ ३४ ॥—

**कदलं मधुरं हृद्यं कषायं नातिशीतलम् ॥ ३५ ॥**
**वातपित्तहरं रुच्यं वृष्यं श्लेष्मकरं गुरु ॥**

कदलीफलगुणानाह—कदलमित्यादि । कदलं कदलीफलं, तच्च नानाविधं ज्ञेयम् ॥ ३५ ॥—

**श्लेष्मलं मधुरं शीतं श्लेष्मातकफलं गुरु ॥ ३६ ॥**
**पनसं सकषायं तु स्निग्धं स्वादुरसं गुरु ॥**

श्लेष्मातकगुणानाह—श्लेष्मलमित्यादि । श्लेष्मातको बहुवारः ॥ ३६ ॥—

पथ्या पञ्चरसाऽऽयुष्या चक्षुष्या लवणा सरा ॥३७॥
मेध्योष्णा दीपनी दोषशोथकुष्ठज्वरापहा ॥

हरीतकीगुणानाह—पथ्येत्यादि । अलवणा सती पञ्चरसा इत्यर्थः ॥ ३७ ॥—

धात्री तद्वद्विशेषेण वृष्या शीतैव वीर्यतः ॥ ३८ ॥
हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः ॥
कफं कटुकषायत्वात् फलेभ्योऽप्यधिकं च तत् ॥३९॥
अक्षं भेदनरूक्षोष्णं वैस्वर्यं क्रिमिनुत् कटु ॥
चक्षुष्यं स्वादुपाकं च कषायं कफपित्तनुत् ॥ ४० ॥

आमलकीगुणानाह—धात्रीत्यादि । अत्र दोषोपशमने यत् कारणं वर्णितं तद्यद्यपि पित्तादिसमानतया पित्तादिवर्धनमपि युज्यते तथाप्यामलक्याः शिवत्वप्रभावात् दोषशमनमेव परं करोति न प्रकोपमिति ज्ञेयम् । एतदेवाह–फलेभ्योऽप्यधिकं च तदिति अधिकमिति श्रेष्ठं, शिवत्वप्रभावयोगादिति भावः ॥ ३८–४० ॥

पथ्या मज्जा तु चक्षुष्यो वातपित्तहरो गुरुः ॥
वैभीतको मदकरः कफमारुतनाशनः ॥ ४१ ॥
कोलमज्जा तु मधुरः कषायः पित्तनाशनः ॥
तृष्णाच्छर्द्यनिलघ्नश्च धात्रीमज्जापि तद्गुणः ॥ ४२ ॥
पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥

प्रसङ्गान्मज्जगुणमाह–पथ्येत्यादि । वैभीतको विभीतकमज्जा ॥ ४१ ॥ ४२ ॥—

यस्य यस्य फलस्येह वीर्यं भवति यादृशम् ॥ ४३ ॥
तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥

अनुक्तमज्जगुणातिदेशार्थमाह–यस्येत्यादि । वीर्यं रसादि, येन कुर्वन्ति तद्वीर्यमित्युक्तेः ॥ ४३ ॥—

भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलम् ॥ ४४ ॥

भल्लातकगुणानाह—भल्लातकास्थीत्यादि । अग्निसममिति स्फोटादिजनकत्वात् ॥४४॥

करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहनुत् ॥

करञ्जादिफलगुणानाह—करञ्जेत्यादि । करञ्जो वृक्षकरञ्जः । किंशुकः पलाशः । अरिष्टो निम्बः । जन्तुः क्रिमिः ॥—

रूक्षोष्णं कटुकं पाके लघु वातकफापहम् ॥
तिक्तमीषद्विषहितं विडङ्गं क्रिमिनाशनम् ॥ ४५ ॥

विडङ्गगुणानाह—तिक्तमित्यादि । ईषत्तिक्तमित्यन्वयः ॥ ४५ ॥

फलेषु परिपक्वं यद्गुणवत्तदुदाहृतम् ॥
बिल्वादन्यत्र तज्ज्ञेयमामं तद्धि गुणोत्तरम् ॥ ४६ ॥

इदानीं यादृशावस्थं फलमुपादेयं तदाह—फलेष्वित्यादि । बिल्वादन्यत्रेति बिल्वमेव परमपक्वं श्रेष्ठम् । गुणोत्तरमिति गुणतः श्रेष्ठम् ॥ ४६ ॥

व्याधितं क्रिमिजुष्टं च पाकातीतमकालजम् ॥
वर्जनीयं फलं सर्वमपर्यागतमेव च ॥ ४७ ॥

यादृशं फलमनुपादेयं तदाह—व्याधितमित्यादि । पाकातीतमिति अतीतपाककालं अतिपाकेन क्लिन्नमित्यर्थः । अकालजमनुचितकालसंभूतम् । अपर्यागतमपरिणतम् ॥४७॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे
फलवर्गो नाम पंचमो वर्गः ।

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां फल-
वर्गो नाम पंचमो वर्गः ।

---

धारं कारं तु तौषारं हैमं खाम्बु चतुर्विधम् ॥

पूर्वमन्नमुक्तं तदुपकरणानि च मांसशाकफलान्युक्तानि इदानीं पानं वक्तव्यं, पानेषु पानीयस्य प्राधान्यात् प्रथमं तद्गुणा वाच्याः, तत्रान्तरीक्षजलस्य सर्वजलश्रेष्ठत्वात् तद्भेदमाह—धारमित्यादि । धाराभवं धारमैन्द्रमित्यर्थः । करकापर्यायः करशब्दः, तद्भवं कारम् । तौषारं शिशिरभवम् । हैमं संहतिभूतहिमभवम् । चरके तु हिमतुषार-योरभेदात् त्रिविधमेवोक्तम् ॥—

धारं त्वत्र द्विधा प्रोक्तं गाङ्गं सामुद्रमेव च ॥ १ ॥

तत्र धारभेदमाह—धारमित्यादि । ननु, चरके धाराख्यमान्तरीक्षजलमेकविधमेवोक्तं, यथा,—"जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तलात् । तत् पतत् पतितं चैव देशकाला-वपेक्षते"—इति । सत्यं, तत्राप्यान्तरीक्षजलस्य धूलीमलविषलूतादिसंबन्धात् सदोषत्वं तदसंबन्धाच्च निर्दोषत्वमिति द्वैविध्यमुक्तयुक्तेरेव; अतोऽत्रापि सामुद्रगाङ्गशब्दयोः सदो-षनिर्दोषत्वमात्रमर्थः, न पुनः समुद्रादाहृतं सामुद्रं, गङ्गाया उद्धृतं मेघैर्गाङ्गमित्यर्थः, तथा सति गङ्गावदपरनदीप्रभृतिभेदादपि भेदकल्पनापत्तेः, अत्र गङ्गाशब्दो नदीप्रभृ-तीनां समुद्रव्यतिरिक्तजलाशयानामुपलक्षक इत्युच्यते । तथापि चरकेण समं विरोधो

दुष्परिहर एव । किंच यदि समुद्रादुद्धृतं सामुद्रमित्येवार्थः, तदा तस्य त्रिदोषकारित्वात् "सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना"—इत्यनेनाश्वयुजेऽपि ग्रहणं वक्ष्यमाणं नोपपद्यते; न च कालविशेषो जलान्तरवत् समुद्रजलमपि निर्दोषीकर्तुं प्रभवति; तस्मात् प्रथमैव व्याख्या युक्ता । यत् पुनः "सामुद्रमप्याश्वयुजे गाङ्गवद्भवति—" इति सुश्रुतवचनं, तदाश्वयुजे आन्तरीक्षस्य निर्दोषतापरं, तदा हि सतोऽपि लूतादिदोषसंबन्धस्य अगस्त्येन हननात्, कालमहिम्ना च बाधितत्वात् । तदुक्तं जतूकर्णेन,—"वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च । तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्—" इति ॥ १ ॥

**येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ॥**
**अक्लिन्नमविवर्णं च तत् पेयं गाङ्गमन्यथा ॥ २ ॥**
**सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ॥**

गाङ्गसामुद्रयोर्भेदेन ज्ञानोपायमाह—येनेत्यादि । येनाम्बुना अभिवृष्टमाभिमुख्यतः सिक्तं शाल्यन्नं रजतपात्रस्थितमक्लिन्नमविवर्णं च भवति तद्गाङ्गं जलमिति ज्ञात्वा पेयं उपयोज्यमित्यर्थः; तेन स्नानावगाहयोरपि ग्रहणम् । अन्यथा एतल्लक्षणविपर्ययेण सामुद्रमिति ज्ञात्वा तन्न पातव्यम् । अथ किं सदैव तन्न पातव्यमित्यत आह—मासादाश्वयुजाद्विनेति । एतच्च अन्तरीक्षजलग्रहणादिकालप्रदर्शनपरम् । तेन कार्तिकेऽपि शरद्रूपे हेमन्ते चान्तरीक्षजलग्रहणमविरुद्धं भवति । यदाह हारीतः,—"प्रवृत्तायां शरद्यस्मात् पश्चाद्वाते प्रवाति च । हेमन्ते चापि गृह्णीयात्तज्जलं मृण्मयैर्घटैः—" इति ॥ २ ॥—

**खाम्बु गङ्गाभवं हृद्यं ह्लादि बुद्धिप्रबोधनम् ॥ ३ ॥**
**तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥**
**जीवनं तर्पणं चैव**

तत्र प्रशस्तस्य धाराख्यान्तरीक्षजलस्य गुणमाह—खाम्बु इत्यादि । हृद्यमिति मनःप्रसादकत्वात् । तनु स्वच्छम् । मृष्टमित्यास्वादसुखम् । जीवनं जीवनहेतुत्वात्; ओजोवृद्धिकरमित्यरुणः, सौम्यधातुवर्धनमित्यन्ये । तर्पणं क्लमहृत् ॥ ३ ॥

**तद्वन्नाभसभूमिगम् ॥ ४ ॥**

भौमजलेऽपि कुत्रचिदान्तरीक्षजलगुणानतिदिशति—तद्वन्नाभसभूमिगमिति ।—नाभसी नभोगुणभूयिष्ठा भूमिः, तद्गतं जलमपि तद्वदान्तरीक्षगाङ्गजलवदित्यर्थः । सुश्रुतेऽप्युक्तम्,—"आकाशगुणभूयिष्ठायामव्यक्तरसं तत् पेयमान्तरीक्षालाभे—" इति (सु. सू. स्था. अ. ४५) ॥ ४ ॥

**कारकं तोयममृतं नैहारं सर्वदोषकृत् ॥**
**अवश्यायभवं रूक्षं वातलं लघु शीतलम् ॥ ५ ॥**

**दाहास्रक्पित्ततृट्छर्दिसक्थिस्तम्भादिपूजितम् ॥**

कारतौषारहैमानामपि क्रमेण गुणानाह—कारकमित्यादि । अवश्यायोऽसंहतीभूतं हिमम् । सक्थिस्तम्भ ऊरुस्तम्भः, तद्धन्तृत्वं च श्लेष्ममेदोहरत्वात् । तदुक्तं—मेदः श्लेष्मसु पूजितमिति ॥ ५ ॥—

**नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥ ६ ॥**

नादेयादिभेदभिन्नानां भौमजलानां गुणमाह—नादेयमित्यादि । नादेयं गङ्गादिनदीभवम् । लेखनं कर्षणम् ॥ ६ ॥

**नदेऽभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् ॥**

नदजलगुणानाह—नदे इत्यादि । नदः शोणभद्रादिः, तत्र यज्जलं तदेवंगुणमित्यर्थः । कफावहं कफकरम् ॥—

**सारसं तुवरं बल्यं तृष्णाघ्नं मधुरं लघु ॥ ७ ॥**

सारसजलगुणानाह—सारसमित्यादि । सरो दिव्यखातं पुरुषव्यापारं विना ॥ ७ ॥

**ताडागं वातलं स्वादु कषायं कटुपाकि च ॥**

ताडागजलगुणानाह—ताडागमित्यादि । तट उच्चप्रदेशस्तस्मादागो गतिर्यस्य स तडागः, स पुनरुच्चप्रदेशादागच्छज्जलस्य निम्नप्रदेशे बन्धनाद्भवति ॥—

**वाप्यं सक्षारकटुकं पित्तलं कफवातनुत् ॥ ८ ॥**

वाप्यजलगुणानाह—वाप्यमित्यादि । वापी इष्टकादिबद्धसोपाना दीर्घिका ॥ ८ ॥

**कौपं कफघ्नं सक्षारं पित्तलं लघु दीपनम् ॥**

कौपजलगुणानाह—कौपमित्यादि । कूपो मृत्पट्टेष्टकादिबद्धसोपानः ॥—

**चौण्डमग्निकरं रूक्षं मधुरं कफकारि च ॥ ९ ॥**

चौण्डजलगुणानाह—चौण्डमित्यादि । चुण्डो नवकूपः प्रत्यासन्नजलः, स पुनर्नद्यादिसमीपे तत्कालकृता लघुकूपिका ॥ ९ ॥

**नैर्झरं लघु पथ्यं च दीपनं कफनाशनम् ॥**

नैर्झरजलगुणानाह—नैर्झरमित्यादि । नैर्झरं उच्चप्रदेशात् प्रस्रवज्जलम् ॥—

**औद्भिदं पित्तशमनं मधुरं न विदाहि च ॥ १० ॥**

औद्भिदजलगुणानाह—औद्भिदमित्यादि । औद्भिदं निम्नप्रदेशादूर्ध्वमुत्तिष्ठज्जलम् ॥ १०

**वैकिरं लघु सक्षारं श्लेष्मलं वह्निदीपनम् ॥**

वैकिरजलगुणानाह—वैकिरमित्यादि । विकिरं वालुकादीन् विकीर्य गृह्यमाणजलस्थानं, तद्भवम् ॥—

**केदारं पाल्वलं स्वादु विपाके गुरु दोषलम् ॥ ११ ॥**
**सामुद्रं लवणं विस्रं सर्वदोषप्रकोपणम् ॥**

केदारजलगुणानाह —केदारमित्यादि । केदारः प्रसिद्धः । पल्वलं तृणाद्याच्छन्नमन्द-
सरः ॥ ११ ॥

**आनूपं वार्यभिष्यन्दि मधुरं पिच्छिलं गुरु ॥ १२ ॥**
**स्निग्धं वह्निहरं सान्द्रं जाङ्गलं वार्यतोऽन्यथा ॥**
**साधारणं वारि शीतं दीपनं मधुरं लघु ॥ १३ ॥**

नद्याद्याधारवशेन जलधर्माननभिधायानूपादिदेशभवत्वेन पुनर्जलगुणमाह—आनूप-
मित्यादि । मधुरमिति व्यक्तरसत्वेन, तद्विपरीतं तु अव्यक्तरसत्वेनेत्यर्थः । यद्यप्यानू-
पादावपि नद्यादिस्थितस्यैव जलस्यामी गुणास्तथापि अनन्तरोक्तनादेयादिगुणेन समं
न विरोधः, यतोऽन्नद्रव्यप्रकृतिरक्तशाल्यादेस्तथा पेयादेस्तद्विकारस्य च पृथगुक्तगुण-
योरिवात्रापि बलाबलनिरूपणं विरोधे सति चिन्तनीयम्; उभयानुगुणतया तु गुणस्यो-
त्कर्ष एव भवतीति प्रतिपादितम् ॥ १२ ॥ १३ ॥

**पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥**
**पथ्याः समस्तास्ता नद्यो विपरीतास्ततोऽन्यथा ॥१४॥**

इदानीं नदीनां गम्यदेशविशेषात् तथा वेगावेगाभ्यां गुणदोषानाह—पश्चिमेत्यादि ।
अतोऽन्यथेति पूर्वसमुद्रगास्तथा मृदुवहास्तथा कलुषोदकाश्चेत्यर्थः । विपरीता इत्यपथ्या
इत्यर्थः ॥ १४ ॥

**उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ १५ ॥**
**हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ॥**
**क्रिमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥ १६ ॥**
**पारियात्रभवा याश्च विन्ध्यसह्यभवाश्च याः ॥**
**शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ॥ १७ ॥**

इदानीं नदीनां प्रभवस्थानविशेषेणापि गुणविशेषमाह—उपलेत्यादि । खेदितं जा-
तक्षोभम् । उपलेत्यादिविशेषणेन हिमवन्मलयाधित्यकाभवानामेव पथ्यत्वमिति बोध-
यति, तेन सुश्रुते हिमवन्मलयप्रभवाणामपथ्यत्वमुक्तं यत्तदुपत्यकाभवनद्यभिप्रायेणेति
चरकेण समं न विरोध इत्याहुः । अत्र पारियात्रदरीभवनदीजलाभिप्रायेण हृद्रोगादि-
कारणमुक्तं, सुश्रुते तु पारियात्रतडागोद्भवनदीबलादिकर्तृतयोक्तेति न विरोधः । तदुक्तं
विश्वामित्रेण,—"तडागजं दरीजं च तडागाद्यत् सरिज्जलम् । बलारोग्यकरं तद्धि दरीजं
दोषलं मतम्"—इति ॥ १५–१७ ॥—

रक्षोघ्नं शीतलं ह्लादि ज्वरदाहविषापहम् ॥
चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् ॥ १८ ॥

चन्द्रकान्तमणिप्रभवजलगुणमाह—रक्षोघ्नमित्यादि । इदं तु चन्द्रकिरणानुप्रवेशान्ना-भसं मणिप्रभावाच्च भौममित्युभयात्मकमिति डल्हनः ॥ १८ ॥

दिवार्ककिरणैर्जुष्टं जुष्टमिन्दुकरैर्निशि ॥
अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना ॥ १९ ॥

भौमजलानामप्यर्कसोमसंस्कारजगुणविशेषं दर्शयन्नाह—दिवेत्यादि । अत्रार्थलभ्य-मपि दिवानिशिपदं समस्तदिवारात्रिव्याप्त्यर्थम् । चन्द्रशब्दो हि हिमाधारतया नैशहिमो-पलक्षकः, अन्यथा पौर्णमास्यामेव परं संपूर्णां निशां व्याप्य चन्द्रांशुयोगः स्यात् । अरूक्षमिति चन्द्रकरसंस्पर्शात् । अनभिष्यन्दीति अर्ककरसंस्पर्शात् । अत्र निषेधमुखेन प्रणयनं स्नेहरौक्ष्ययोरतिशैत्यौष्ण्ययोरिव दोषवत्त्वसूचनार्थम् । तत्तुल्यं गगनाम्बुनेति एतेन गगनजलालाभे तत्कार्ये तदेवोपयुज्यत इति दर्शयति ॥ १९ ॥

नारिकेलोदकं वृष्यं स्वादु स्निग्धं हिमं गुरु ॥
हृद्यं पित्तपिपासाघ्नं दीपनं वस्तिशोधनम् ॥ २० ॥
नारीकेलजलं जीर्णं गुरु विष्टम्भि पित्तकृत् ॥
बालक्रमुकतोयं तु तृष्णापित्तास्रजिद्गुरु ॥ २१ ॥
तालाम्बु पित्तजिच्छुक्रस्तन्यवृद्धिकरं गुरु ॥

नारिकेलोदकगुणमाह—नारिकेलेत्यादि । नारिकेलोदकमिति ईषत्पक्वनारिकेलमिति जेज्जडः । पित्तपिपासाघ्नमिति पित्तजनितपिपासाघ्नं, तेनामजादिपिपासाहरं न भवतीति चक्रः । जेज्जडस्तु गुर्वित्यत्र लघ्विति पठति, तत्तु मधुरे वृष्ये स्निग्धे च अनुपपन्नं, प्रभावात्तद्वर्णनं नागमान्तरसाधितमिति चक्रः ॥ २० ॥ २१ ॥—

मूर्च्छापित्तोष्णदाहेषु विषे रक्ते मदात्यये ॥ २२ ॥
श्रमक्लमपरीतेषु तमके वमथौ तथा ॥
ऊर्ध्वगे रक्तपित्ते तु शीतमम्भः प्रशस्यते ॥ २३ ॥

इदानीं शैत्यस्य प्रशस्तत्वेन तद्विषयं सापवादमाह—मूर्च्छेत्यादि । उष्ण आतपस्त-दुपलक्षितो ग्रीष्मः शरच्चेति चन्द्रिका, आतपजनितदाह इति चक्रः । तमके श्वासवि-शेषे, मोह इति वा ॥ २२ ॥ २३ ॥

पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ॥
आध्माने स्तिमिते कोष्ठे सद्यःशुद्धे नवज्वरे ॥ २४ ॥

**हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥**

कुत्र पुनस्तन्नोपयुज्यत इत्याह—पार्श्वशूल इत्यादि । स्तिमिते कोष्ठे आमकोष्ठ इति गयदासः । सद्यःशुद्ध इति सद्यःकृतशोधने । सद्यःशब्दोऽयं तस्मिन्नेव शोधनक्रियाव्याप्तेऽहनि वर्तत इत्येके। अन्ये सद्यःशब्दोऽयं सप्तरात्रे वैद्यकव्यवहाराद्बोध्यः। यथा सद्यः प्राणहराणि सप्तरात्राभ्यन्तरे मारयन्तीत्याहुः । एषु शीताम्बुनिषेधादुष्णजलस्य विधिरित्यर्थलब्धमेव, सविशेषण इत्यादिन्यायात् ॥ २४ ॥—

**उष्णोदकं सदा पथ्यं कासश्वासज्वरापहम् ॥ २५ ॥**
**कफवातामदोषघ्नं दीपनं बस्तिशोधनम् ॥**

तस्यैवोष्णोदकस्य गुणमाह—उष्णोदकमित्यादि । यद्यप्यौष्ण्यं जलस्य स्पर्शदोष इति सुश्रुतेनोक्तं तथापि अवस्थायां व्याधिविशेषहरत्वेनोपादेयमपीति केचित्; वस्तुतस्तु भूवाष्पजनितौष्ण्यमेव सदोषत्वेन तत्रोक्तं, इदं तु अग्न्यातपकृतमिति न विरोधः । पन्थाः श्रोतस्तस्मै हितं पथ्यं, श्रोतःशुद्धिकरमित्यर्थः । बस्तिशोधनमिति बस्तिशब्देन तात्स्थ्यान्मूत्रमुच्यत इत्यरुणः । यथा यथा सलिलस्याग्निसंयोगप्रकर्षस्तथा तथा कफादिहरत्वप्रकर्षोऽपि बोध्यः । उष्णोदकं तु तन्त्रान्तरप्रसिद्ध्या साधनीयम् । तदुक्तमग्निवेशतन्त्रे,—"क्वाथ्यमानं तु यत्तोयं निष्फेनं निर्मलीकृतम् । भवत्यर्धावशिष्टं तु तदुष्णोदकमिष्यते" ॥ २५ ॥—

**शृतशीतं त्रिदोषघ्नं यदन्तर्बाष्पशीतलम् ॥ २६ ॥**
**शीतीकृतं तु विष्टम्भि दुर्जरं पवनाहतम् ॥**
**न तत् पर्युषितं देयं कदाचिदपि जानता ॥ २७ ॥**
**व्यम्लीभवेत् पर्युषितं कफक्लेदि पिपासवे ॥**

शृतशीतजलगुणमाह—शृतशीतमित्यादि ।—अन्तर्बाष्पं सत् कालप्रतीक्षया शीतलमित्यर्थः । पवनाहतं पवनेन शीतीकृतमिति भावः । तदिति शृतशीतलं जलम् । अत्र देशादिभेदेन क्वथनप्रकर्षापकर्षावपि बोध्यौ । यदाह वृद्धवाग्भटः—"क्षीणपादत्रिभागार्धं देशर्तुगुरुलाघवात्"—इति । धन्वसाधारणानूपेषु देशेषु तथा शीतोष्णवर्षोपलक्षिते च ऋतुत्रये यथाक्रमं क्षयितचतुर्भागत्रिभागार्धं सलिलमुपयोज्यमित्यर्थः । अत्रैवार्थे माधवकरस्तन्त्रान्तरमन्यादृशं लिखति । तद्यथा,—"शारदं सार्धपादोनं पादहीनं तु हैमनम् । शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ अष्टभागावशिष्टं तु कारयेत् प्रावृषं जलम्"—इति तदुभयमपि प्रमाणं स्मृतिद्वैविध्यवत् ॥ २६॥२७ ॥

**शृतं तोयं दिवा रात्रौ गुरु रात्रिशृतं दिवा ॥ २८ ॥**

अस्यैव शृतजलस्य विशेषान्तरमाह—शृतमित्यादि । दिवा शृतं तोयं रात्रौ गुरु भवति, रात्रिशृतं तु दिवा गुरु भवतीत्यर्थः ॥ २८ ॥

भौमानामम्भसां प्रातः सर्वेषां ग्रहणं मतम् ॥
तदा हि शैत्यं नैर्मल्यं तौ चापां परमौ गुणौ ॥ २९ ॥

इदानीं भौमानां जलानां ग्रहणकालमाह—भौमानामित्यादि ॥ २९ ॥

आन्तरीक्षं तु वर्षासु कौपमौद्भिदमेव च ॥
अगस्त्योदयनैर्मल्यात्सर्वं शरदि शस्यते ॥ ३० ॥
सरस्तडागसंभूतं हेमन्ते जलमिष्यते ॥
कौपचौण्डे वसन्ते तु ग्रीष्मे प्रास्रवणौद्भिदे ॥ ३१ ॥
कौपं प्रावृषि सर्वं वा संस्कृतं वारि चेष्यते ॥

इदानीं कालविशेषे जलविशेषोपयोगमाह—आन्तरीक्षमित्यादि । ननु, 'वर्षासु आन्तरीक्षम्'—इति यदुक्तं तन्नोपपद्यते, जतूकर्णादिविरोधात्; तथा हि,—"वर्षासु चरन्ति घनैः सहोरगा वियति कीटलूताश्च । तद्विषजुष्टमपेयं खजलमगस्त्योदयात् पूर्वम्"—इत्यनेन खजलस्य वर्षासु निषेधात्; अन्यत्राप्युक्तम्,—"बलाहकायाः सविषाः कीटलूताश्च खेचराः । तद्विषोत्सर्गसंसर्गादग्राह्यं तत्तदा जलम्"—इति । अत्र केचित्—वर्षाशब्दो वर्षान्ते आश्वयुजे वर्तते, तेनाश्विने गृहीतस्यान्तरीक्षस्यैव तत्रोपयोगः, भाद्रे तु आन्तरीक्षजलानुकारिणो भौमजलस्य कौपौद्भिदयोर्वा उपयोग इति न विरोध इत्याहुः । तन्न, आश्विने अगस्त्योदयेन सर्वजलस्यैव प्रसन्नत्वादिति प्रतिनियमानुपपत्तेः; किंच 'माहेन्द्रं तप्तशीतं वा कौपं सारसमेव वा—' (च. सू. स्था. अ. ६) इत्यनेन चरके श्रावणभाद्ररूपवर्षास्वेव माहेन्द्रजलोपयोग उक्तः; न च तत्रापि भाद्राश्विनौ वर्षा इति वक्तुं शक्यते, तस्याशितीयोक्तर्तुक्रमानुसारेणैव ऋतुचर्याभिधानस्य तत्रोपक्रान्तत्वात्; अन्यथा प्रकरणविरोधः स्यात् । अन्ये तु ऋत्वन्तरगृहीतमान्तरीक्षं जलं वर्षासु पेयमित्याहुः । अस्मद्गुरुचरणास्तु द्विविधं हि आन्तरीक्षं लूतादिसंबद्धमसंबद्धं च; तत्राद्यं सदोषं तत्परमेव जतूकर्णवचनमवगन्तव्यम्, द्वितीयं तु निर्दोषं; न च वर्षासु सर्पादिविषसहितमेव जलं मेघा वर्षन्तीत्यागमोऽस्ति; एतदभिप्रायेणैव सुश्रुतादौ गाङ्गसामुद्रव्यवस्था; तेन वर्षास्वेव यदा सविषप्राण्यादिसंबन्धो भवति तदा सदोषं सामुद्रशब्दाभिधेयं, अन्यथा तु निर्दोषं गाङ्गशब्दाभिधेयम् । तद्वर्षास्वपि ग्राह्यमेव अतएव गाङ्गसामुद्रपरीक्षापि तत्रोपपन्ना; अन्यथा वर्षाव्यतिरिक्तकाले लूतादिसंबन्धस्य कालमहिम्नैवापगतत्वेन परीक्षाया अकिंचित्करत्वादित्याहुः । प्रपञ्चितमेतच्चरकतत्त्वदीपिकायामेव अस्माभिरिति नेह प्रतन्यते । "अगस्त्योदयनैर्मल्यात् सर्वं शरदि शस्यते" (च. सू. स्था. अ. २७) इत्यत्र शरच्छब्देनाश्विनस्याप्युपग्रहो बोध्यः, चरके तस्याशीतीये अन्यत्रापि आश्विनकार्तिकरूपशरद्येव सर्वजलप्रसादस्योक्तत्वात्, नैर्मल्यहेतोरगस्त्योदयस्य तत्रापि विद्यमा-

नत्वाच्च; किंवा माघादिमासद्वयात्मकर्तुक्रमानुसारेण वर्षादयोऽत्र बोध्याः । तथा सति शरच्छब्देनाश्विनकार्तिकयोरेव ग्रहणम् । अस्मिंस्तु पक्षे हेमन्तविधानेन हेमन्ततुल्यतया शिशिराभिधानं समाधेयम् । यदुक्तम्,—"हेमन्तशिशिरे तुल्ये शिशिरेऽल्पं विशेषणम् । तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते"—( च. सू. स्था. अ. ६ ) इति, तथा "कौपं प्रावृषि—" इत्यत्र प्रावृट्शब्देन वर्षाप्रथमकालः श्रावणप्रथमरूपो बोध्यः । सरस्तडागेत्यादि हेमन्ते सारसं, कषायलघुत्वात्; ताडागं च, कषायतया कटुपाकितया च चीयमानकफहरम् । तथा वसन्ते कौपं सक्षारत्वात्, चौण्डं रूक्षत्वाच्च कफहरं युज्यते । ग्रीष्मे प्रास्रवणं, पथ्यत्वात् शैत्याच्च, औद्भिदं मधुरत्वाच्च पित्तशमनं युक्तम् । कौपं प्रावृषीति तदाकाशजलेनानतिजुष्टत्वात् । सर्वं वा संस्कृतमिति सर्वस्यैवातिवर्षणेन दुष्टत्वात् । संस्कारः क्वथनरूपः कार्य इत्यर्थः ॥ ३० ॥ ३१ ॥—

**हठशैवलपङ्कादिसंछन्नं दोषलं च तत् ॥ ३२ ॥**
**वाय्वर्ककिरणास्पृष्टं न पेयं साधनादृते ॥**

यादृशं जलं नोपयुज्यते तदाह—हठेत्यादि । हठः कुम्भिका 'पाहा' इति ख्यातः । दोषलमिति स्पर्शादिदोषयुक्तम् । तदुक्तं,—"जलस्य स्पर्शरूपरसगन्धवीर्यविपाकदोषाः षड् भवन्ति । तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः । पङ्कसिकताशैवालवर्णता रूपदोषाः । व्यक्तरसता रसदोषः । अनिष्टगन्धता गन्धदोषः । यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्यदोषः । यदुपयुक्तं चिराद्विपच्यते विष्टम्भयति च स विपाकदोषः"—( सु. सू. स्था. अ. ४५ ) इति । साधनादृत इति साधनं संस्कारः, संस्कारश्चाग्निक्वथनसूर्यतापादिभिः सुश्रुतोक्तैः कार्यः ॥ ३२ ॥—

**अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ३३ ॥**
**मन्देऽग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा ॥**
**व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ३४ ॥**

यत्र यत्र जलस्यातियोगो न कार्यस्तदाह—अरोचक इत्यादि । मन्दमतिस्तोकम् ॥ ३३ ॥ ३४ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे पानीयवर्गो नाम षष्ठो वर्गः समाप्तः ॥**

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां पानीयवर्गो नाम षष्ठो वर्गः ।

---

**क्षीरमष्टविधं गव्यमाजमौरभ्रमाहिषे ॥**
**कारेणवमथौष्ट्रं च वाडवं मानुषं तथा ॥ १ ॥**

पयःक्षीरसंज्ञासामान्यात् पय इव जीवनत्वादिगुणयोगाच्च तोयवर्गानन्तरं क्षीरवर्गः प्रस्तूयते । तत्र गव्यस्य प्रधानत्वात् तत्पूर्वमष्टविधं क्षीरं निर्दिशति—क्षीरमित्यादि । यद्यपि खड्गिमृगादीनामपि क्षीरमस्ति तथापि तस्यानुपयोगादिहानभिधानम् । तन्त्रेष्व-प्यष्टावेव क्षीराण्युक्तानि ॥ १ ॥

**क्षीरं स्वादुरसं स्निग्धमोजस्यं धातुवर्धनम् ॥**
**वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥ २ ॥**

तत्र क्षीरसामान्यगुणमाह—क्षीरमित्यादि । धातुवर्धनत्वेन वृष्यत्वे सिद्धे वृष्यमिति वचनं अतिशयेन शुक्रजनकत्वं बोधयति ॥ २ ॥

**गोक्षीरमनभिष्यन्दि स्निग्धं स्वादु रसायनम् ॥**
**रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ ३ ॥**
**जीवनीयं तथा वातपित्तघ्नं परमं मतम् ॥**

सामान्यगुणमभिधाय गव्यादिविशेषगुणमाह—गोक्षीरमित्यादि । अनभिष्यन्दीति नञ् ईषदर्थे, सुश्रुते अल्पाभिष्यन्दीति वचनात् । अभिष्यन्दित्वं च दोषधातुमलस्रो-तसां क्लेदजनकत्वम् । रक्तपित्तहरत्वमवस्थाविशेषे ज्ञेयम् ॥ ३ ॥—

**छागं कषायमधुरं शीतं ग्राहि पयो लघु ॥ ४ ॥**
**रक्तपित्तातिसारघ्नं क्षयकासगरापहम् ॥**
**अजानामल्पकायत्वात् कटुतिक्तनिषेवणात् ॥ ५ ॥**
**नात्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं पयः ॥**

अजाक्षीरगुणानाह—छागमित्यादि । सर्वव्याधिहरमिति सर्वदोषहरं, कारणे कार्यो-पचारात् व्याधिशब्दो दोषे वर्तते । अतएव चरकेणोक्तम्—"समानो हि रोगशब्दो दोषेषु व्याधिषु च वर्तते"—इति; किंवा सर्वशब्दो विपुलवचनः ॥ ४ ॥ ५ ॥—

**मेषीक्षीरं गुरु स्वादु स्निग्धोष्णं कफपित्तकृत् ॥ ६ ॥**
**शुद्धेऽनिले भवेत्पथ्यं सेके चानिलशोणिते ॥**

मेषीक्षीरगुणानाह—मेषीत्यादि । उष्णमिति सामान्योक्तक्षीरशीतगुणापवादरूपम् । एव-मन्यत्राप्येवंजातीये व्याख्येयम् । कफपित्तकृदिति कफपित्तकरं, पित्तश्लेष्मलमाविकमिति चरकवचनात् । शुद्धेऽनिले इति दोषान्तरेणासंपृक्ते, अनावृते च । अनिलशोणिते शोणितावृतवाते । सेके परिषेकनिमित्तं हितमित्यर्थः ॥ ६ ॥—

**महिषीणां गुरुतरं गव्याच्छीततरं पयः ॥ ७ ॥**
**स्नेहादूनमनिद्राणामत्यग्नीनां हितं च तत् ॥**
**हस्तिनीनां पयो बल्यं गुरु स्थैर्यकरं वरम् ॥ ८ ॥**
**ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥**
**शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥ ९ ॥**

महिषीक्षीरगुणानाह—महिषीणामित्यादि । महिषीक्षीरं गव्यात् क्षीरात् गव्यक्षीरमपेक्ष्य गुरुतरमतिशयेन गुरु, तथा शीततरं च; स्नेहात् पुनरूनं हीनमित्यर्थः। इदं पुनरसंगतं, प्रत्यक्षविरोधात्; प्रत्यक्षमेव महिषीक्षीरादधिकमेव घृतं दृश्यते; तथा जतूकर्णेऽप्युक्तम्,—"गुरु शीतं स्निग्धतरं माहिषमतिबल्यं बृंहणं चाग्र्यम्—" इति। सुश्रुतेऽप्युक्तं,—"गव्यात् स्निग्धतरम्—" इति। तस्मादत्र गव्यस्नेहादूनमिति योज्यम् । तेन महिषीक्षीरं गव्यस्नेहादूनं हीनम् । गव्यक्षीरात् पुनः स्नेहाधिकमेवेत्यर्थ इति चन्द्रिका । अन्ये तु स्नेहान्यूनमिति पठित्वा स्नेहाधिकमित्यर्थं कुर्वन्ति ॥ ७—९ ॥

**उष्णमैकशफं बल्यं शाखावातहरं पयः ॥**
**ईषदम्लं स्वादु रूक्षं लवणानुरसं लघु ॥ १० ॥**

ऐकशफक्षीरगुणानाह—उष्णमित्यादि । एकः शफः खुरो यासां ता एकशफाः । अत्राश्वाया इति वक्तव्ये यदैकशफमिति सामान्यशब्दप्रयोगं करोति तद्वेगसरीप्रभृतीनामप्येकशफानां क्षीरग्रहणार्थम् । शाखावातहरमित्यत्र केचित् शाखाशब्देन बाहू सक्थनी चाहुः, अन्ये तु वक्त्रादीनाहुः । धान्याम्लस्येवोभयत्राधारशक्तिप्रभावेण परस्परविरुद्धकार्यद्वयं भवति । तद्यथा बहिरन्तः पित्तहरकरत्वम् । एवं शाखागतवातहरत्वं कुक्षिगतवातकरत्वं चास्याधारशक्तिप्रभावेण मन्तव्यमित्याहुः ॥ १० ॥

**नार्यास्तु मधुरं स्तन्यं कषायानुरसं हिमम् ॥**
**नस्याश्च्योतनयोः पथ्यं जीवनं लघु दीपनम् ॥ ११ ॥**

नारीक्षीरगुणानाह—नार्या इत्यादि । आश्च्योतनमक्षिपूरणम् ॥ ११ ॥

**क्षीरसंतानिका वृष्या स्निग्धा पित्तानिलापहा ॥**

क्षीरसंतानिकागुणमाह—क्षीरेत्यादि । क्षीरसंतानिका दुग्धसरः ॥—

**पयोऽभिष्यन्दि गुर्वामं प्रायशः परिकीर्तितम् ॥ १२ ॥**
**तदेवोक्तं लघुतरमनभिष्यन्दि वै शृतम् ॥**

असंस्कृतस्य तथा संस्कृतस्य क्षीरस्य क्रमेण गुणमाह—पय इत्यादि । आममित्यशृतम् ॥ १२ ॥—

**वर्जयित्वा स्त्रियाः स्तन्यमाममेव हि तद्धितम् ॥ १३ ॥**

स्त्रीस्तन्यस्य पुनः शृतत्वं दोषायेत्याह—वर्जयित्वेत्यादि ॥ १३ ॥

**धारोष्णं गुणवत्क्षीरं विपरीतमतोऽन्यथा ॥**

सर्वक्षीराणामेव दोहकालधारापातोष्णानां गुणमाह—धारोष्णमित्यादि । सद्योदोहधारासंबन्धोष्णतायुक्तम् । गुणवदिति प्रशस्तरसायनत्वगुणयुक्तम् । यदुक्तं भोजे,—"पयोऽभिष्यन्दि गुर्वामं शृतोष्णं कफवातजित् । शृतशीतं तु पित्तघ्नं सद्योदुग्धं रसायनम्—" इति । विपरीतमतोऽन्यथेति न तथा प्रशस्तगुणम् ॥—

**तदेवातिशृतं सर्वं गुरु बृंहणमुच्यते ॥ १४ ॥**

अतिशृतक्षीरणानाह—तदित्यादि । अतिशृतमित्यतिपाकेन घनीभूतम् ॥ १४ ॥

**अनिष्टगन्धमम्लं च विवर्णं विरसं च यत् ॥**
**वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत् ॥ १५ ॥**

क्षीरस्यैवावस्थाविशेषेण वर्जनीयतामाह—अनिष्टगन्धमित्यादि । अम्लत्वं सलवणत्वं चैव विदाहात्; गवादीनामत्यर्थलवणसेवनाद्वा सलवणम् । विग्रथितमिति अम्लादियोगेन विग्रथिततामापन्नम् ॥ १५ ॥

**दध्यम्लं मधुरं ग्राहि गुरूष्णं वातनाशनम् ॥**
**मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥ १६ ॥**
**रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥**
**पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥ १७ ॥**

क्षीरमनु क्षीरकार्यतया तद्विकारेऽभिधातव्ये मङ्गल्यतया प्रथमं दधिगुणमाह—दधीत्यादि । अत्राम्लमधुरत्वेन सुजातत्वं लक्षयति, मन्दजातस्यास्य अनम्लत्वात्, सुजातकालात्यये चात्यम्लत्वात्; अत्राम्लत्वोष्णत्वस्निग्धत्वाल्लभ्यमानमपि वातनाशनत्वं यत् पुनरुच्यते तत् प्रकर्षार्थम्, तथाम्लत्वादियुक्तस्यापि वातहन्तृत्वादिव्यभिचारदर्शनाच्चेति ज्ञेयम् । व्यभिचारोदाहरणानि मन्दकमन्दजातमद्यादीन्यनुसर्तव्यानि । न्यायश्चायमेवंजातीये सर्वत्रैव बोध्यः । अरुचौ शस्तमित्युक्त्वापि रोचिष्णु इति वचनम्, अरोचकहरस्यापि तिक्तरसस्य रोचिष्णुत्वव्यभिचारदर्शनाज्ज्ञेयम् । शीतक इति विषमज्वरविशेषणम् । पीनस इति चतुर्विधपीनसे प्रभावात् हितम्; किंवा पीनसपाचकत्वात् सर्वत्र हितम्; अन्ये तु पीनसे शस्तमिति यद्यपि सामान्यत एवोक्तं तथापि योग्यतया वातिकपीनसे एव शस्तमित्याहुः । रूक्षमुद्धृतसारं पुनर्ग्रहणीगदे हितमिति योज्यम् ॥ १६ ॥ १७ ॥

**गव्यं दधि च मङ्गल्यं वातघ्नं शुचि रोचकम् ॥**
**स्निग्धं विपाके मधुरं दीपनं बलवर्धनम् ॥ १८ ॥**

दध्याजं कफपित्तघ्नं लघु वातक्षयापहम् ॥
दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥ १९ ॥

सामान्यगुणमभिधाय विशेषगुणमाह—गव्यमित्यादि । मङ्गल्यत्वमिह प्रभावात् ॥ १८ ॥ १९ ॥

विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम् ॥
बलाशवर्धनं स्निग्धं विशेषाद्दधि माहिषम् ॥ २० ॥

माहिषदधिगुणानाह—विपाक इत्यादि । अत्र विशेषादिति पदं स्निग्धमित्यनेन बलाशवर्धनमित्यनेन च संबध्यते ॥ २० ॥

कोपनं कफवातानां दुर्नाम्नां चाविकं दधि ॥

आविकदधिगुणानाह—कोपनमित्यादि । कफवातानां दुर्नाम्नां च कोपनमित्यन्वयः । कफवाताभ्यामिति पाठे संभूतानामिति शेषः, तेन कफवाताभ्यां संभूतानां दुर्नाम्नां कोपनमित्यर्थः ॥—

दीपनीयमचक्षुष्यं वातलं वाडवं दधि ॥ २१ ॥
रूक्षमुष्णकषायं च कफमूत्रापहं च तत् ॥

वडवादधिगुणानाह—दीपनीयमित्यादि । अचक्षुष्यत्वमिह प्रभावादिति चन्द्रिका । कफमूत्रापहत्वं च रूक्षोष्णत्वात् ॥ २१ ॥—

स्निग्धं विपाके मधुरं बल्य संतर्पणं गुरु ॥ २२ ॥
चक्षुष्यमग्र्यं दोषघ्नं दधि नार्या गुणोत्तरम् ॥
लघु पाके बलाशघ्नं वीर्योष्णं पक्तिनाशनम् ॥ २३ ॥
कषायानुरसं नाग्या दधि वर्चोविबन्धनम् ॥

नारीदधिगुणानाह—स्निग्धमित्यादि । चक्षुष्यमग्र्यमिति श्रेष्ठं चक्षुष्यमित्यर्थः; चक्षुर्हितत्वमस्य प्रभावात् । गुणोत्तरमिति गुणैः प्रधानम् ॥ २२ ॥ २३ ॥—

दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् ॥२४॥
विज्ञेयमेव सर्वेषु गव्यमेव गुणोत्तरम् ॥

सर्वेषु दधिषु गव्यस्य प्राधान्यमाह—दधीनीत्यादि ॥ २४ ॥—

वातघ्नं कफकृत् स्निग्धं बृंहणं नातिपित्तकृत् ॥ २५ ॥
कुर्याद्भक्ताभिलाषं च दधि यत् सुपरिस्रुतम् ॥

इदानीं तस्यैव दध्नोऽवस्थान्तरेषु गुणोत्तरं दर्शयन्नाह—वातघ्नमित्यादि । सुपरिस्रुतं सुष्ठु गलितद्रवभागम् ॥ २५ ॥—

शृतक्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ॥ २६ ॥
वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ॥

क्वथितक्षीरस्य दध्नो गुणमाह—शृतक्षीरादित्यादि ॥ २६ ॥—

दधि त्वसारं रूक्षं च ग्राहि विष्टम्भि वातलम् ॥ २७ ॥
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥

उद्धृतस्नेहस्य दुग्धस्य दध्नो गुणमाह—दधीत्यादि । असारमुद्धृतस्नेहम् ॥ २७ ॥—

दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ॥ २८ ॥
वह्नेर्विधमनश्चापि कफशुक्रविवर्धनः ॥

दधिसरगुणमाह—दध्न इत्यादि । वह्नेर्विधमनो वह्निमान्द्यकरः । सरो दध्न उपरितनो भागः । वृष्यः शुक्रविवर्धन इति पदद्वयोपादानं स्रुतिवृद्धिकरभेदेन वृष्यद्वयपरिग्रहार्थम् ॥ २८ ॥—

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ २९ ॥
शोथोदरार्शोग्रहणीदोषमूत्रग्रहारुचि ॥
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयाञ्जयेत् ॥ ३० ॥

तक्रगुणमाह—तक्रमित्यादि ॥ २९ ॥ ३० ॥

मस्तु तद्वत् सरं स्रोतःशोधि विष्टम्भजिल्लघु ॥

अतिदेशेन मस्तुगुणमाह—मस्त्वित्यादि । तद्वदिति गुणैस्तक्रवत् ॥—

ससरं निर्जलं घोलं तक्रं पादजलान्वितम् ॥ ३१ ॥
अर्धोदकमुदश्वित् स्यान्मथितं सरवर्जितम् ॥

दध्नः संस्कारविशेषेण नामविशेषानाह—ससरमित्यादि । चरकादिभिस्तक्रं विहाय एते त्रयो भेदाः कण्ठरवेण नोक्ताः; यतो घोलस्य दध्न एवान्तर्भावः, यतः ससरं निजलं दधि मथितं सत् दध्नो नातिरिच्यते, मन्थनसंस्कारेण परं तत्र लाघवं जनितम्, उदश्विन्मथितयोस्तक्र एवान्तर्भावः । अत एवोक्तं तन्त्रान्तरे,—"मन्थनादिपृथग्भूतस्नेहमर्धोदकं च यत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लतुवरं सरम् ॥ अजलं स्नेहहीनं यत् तत्तक्रं कफनाशनम्"—इति । चरके तु त्रिविधं तक्रमुक्तम्,—"रूक्षमर्धोद्धृतस्नेहं यतश्चानुद्धृतं घृतम् । तक्रं दोषाग्निबलवित्त्रिविधं संप्रयोजयेत्—" इति (च. सू. स्था. अ. २७) ॥ ३१ ॥—

घोलं पित्तानिलहरं तक्रं दोषत्रयापहम् ॥ ३२ ॥
उदश्विच्छ्लेष्मलं चैव मथितं कफपित्तनुत् ॥

इदानीमस्यैव भेदचतुष्टयस्य गुणमाह—घोलमित्यादि । यद्यपि पूर्वं तक्रस्य वातकफहरत्वमेवोक्तं तथापि मधुरत्वेन मधुरपाकित्वेन च पित्ताजनकत्वात् द्रव्यान्तरसंयोगाद्वारा पित्तशमनमपीति मत्वा दोषत्रयापहत्वमस्योक्तं; सुश्रुते तु मधुरस्य तक्रस्य पित्तहरत्वं साक्षादेवोक्तम्,—"तत् पुनर्मधुरं श्लेष्मप्रकोपणं पित्तशमनं च—" इति (सु. सू. स्था. अ. ४५) ॥ ३२ ॥—

**वातेऽम्लं सैन्धवोपेतं पित्ते स्वादु सशर्करम् ॥ ३३ ॥**
**पिबेत्तक्रं कफे चापि व्योषक्षारसमायुतम् ॥**

यत्र यादृशं तक्रं युक्तं तदाह—वात इत्यादि ॥ ३३ ॥—

**नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ॥ ३४ ॥**
**न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपित्तके ॥**

तक्रस्याविषयमाह—नेत्यादि । उष्णकाले शरदि ग्रीष्मे च ॥ ३४ ॥—

**ग्राहिणी वातला रूक्षा विज्ञेया तक्रकूर्चिका ॥ ३५ ॥**

तक्रस्य हेत्वन्तरग्रथितस्य घनो भागस्तक्रकूर्चिकेत्युच्यते, तद्गुणमाह—ग्राहिणीत्यादि ॥ ३५ ॥

**तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥**

तक्रकूर्चिकादधिकूर्चिकाभ्यां जातस्य मस्तुनो गुणविशेषमाह—तक्रादित्यादि । मण्ड इति मस्तु, तस्य विशेषणं कूर्चिकादधितक्रज इति; कूर्चिकाभूतं यद्दधि कूर्चिकाभूतं च यत्तक्रं ताभ्यां जातो मण्डस्तक्राल्लघुतर इत्यर्थः । दधिकूर्चिकालक्षणं यथा,—"दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका"—इति । ये तु 'दधिकूर्ची च तक्रवत्'—इति पठन्ति, तन्मते दधिकूर्चिका तक्रवदिति तक्रकूर्चिकासमानगुणा, अन्ये 'दधिकूर्चिकातक्रज' इति पठन्ति, व्याचक्षते च—प्रकृतदधिजस्तथा कूर्चिकाभूतदधिजः तथा कूर्चिकाभूततक्रजश्च मण्ड इति मस्तुत्रयस्यायं गुणनिर्देश इति ॥—

**किलाटोऽनिलाहा वृष्यः कफनिद्राकरो गुरुः ॥ ३६ ॥**

कूर्चिकाप्रस्तावात् क्षीरकूर्चिकागुणमाह—किलाट इत्यादि । नष्टक्षीरपिण्डं यमाहुर्लोकाः 'क्षीरसा' इति ॥ ३६ ॥

**मधुरो बृंहणस्तद्वत् पीयूषोऽपि स मोरटः ॥**

पीयूषमोरटयोर्गुणमाह—मधुर इत्यादि । तद्वदिति किलाटतुल्यः । पीयूषमोरटयोर्लक्षणं यथा,—"क्षीरं सद्यः प्रसूतायाः पीयूषमिति संज्ञितम् । सप्तरात्रात् परं क्षीरमप्रसन्नं च मोरटम्"—इति । जेज्जडस्तु मोरटस्थाने मोरणं पठति, व्याचष्टे च—मोरणो नष्टक्षीरद्रवभाग इति ॥—

**नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥ ३७ ॥**
**संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ॥**

तक्रनिष्पत्त्यनन्तरं नवनीतमुत्पद्यत इति तक्रानन्तरं नवनीतगुणानाह—नवनीतमित्यादि । नवमिति सद्यस्कम् । एतेनाभिनवस्यैवैते गुणाः प्रकर्षवन्तो भवन्तीति दर्शयति ॥ ३७ ॥—

**क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगनुत् ॥ ३८ ॥**

क्षीरमथनोत्थितस्य नवनीतस्य गुणमाह—क्षीरोद्भवमित्यादि ॥ ३८ ॥

**विकल्प एष दध्यादिः श्रेष्ठो गव्योऽभिवर्णितः ॥**
**विकल्पानवशिष्टांस्तु क्षीरवीर्यात् समादिशेत् ॥ ३९ ॥**

ननु, क्षीरं दधि च गव्यादीनां प्रतिप्रतिगुणत उक्तम्, मस्तुतक्रादयस्तु समान्येनोक्ताः, तत् किं गव्यमस्त्वादय एते गुणतो वाच्या न वेत्याशङ्कायामाह—विकल्प इत्यादि । विकल्पो भेदः, प्रकार इति यावत् । दध्यादिरिति अतद्गुणसंविज्ञानबहुव्रीहिः । तेन मस्तुतक्रादिरूप इत्यर्थः । श्रेष्ठ इति हेतुगर्भविशेषणम् । तेन श्रेष्ठत्वाद्गव्य एवोक्तः, न पुनरजावीप्रभृतीनामित्यर्थः । अभिवर्णितः कथितः । यद्येवं छागादिमस्त्वादीनां गुणाः कथं ज्ञातव्या इत्याह—विकल्पानित्यादि । वीर्यशब्दोऽत्र गुणवचनः । तेन पञ्चमी ल्यब्लोपे । तेन छागादिक्षीराणां ये गुणा उक्तास्तान् सुवीक्ष्य तन्मस्तुतक्रादावपि तत्सदृशान् गुणान् वदेदित्यर्थः । केचिदिमं श्लोकमनार्षमिति वदन्ति; तत्तु न सम्यक्, यतोऽपठ्यमानेऽस्मिन् श्लोके अजादितक्रादिगुणानुक्ते न्यूनता स्यात् । न वा तक्रादिविकल्पस्य सामान्यगुणोक्तिरिति वक्तुं युज्यते, सुव्यक्तपरस्परगुणभेदादजादितक्राणाम् । अत एवोक्तं वाग्भटेन,—"विद्याद्दधिघृतादीनां गुणदोषान् यथा पयः"—इति ॥ ३९ ॥

**घृतं बुद्ध्यग्निशुक्रौजोमेदःस्मृतिकफावहम् ॥**
**वातपित्तविषोन्मादशोषालक्ष्मीजरापहम् ॥ ४० ॥**
**स्नेहोत्तमं योगवाहि सर्वथा मधुरं हिमम् ॥**

नवनीतसंभवात् घृतस्य नवनीतानन्तरं घृतगुणमाह–घृतमित्यादि । कफावहमिति कफकरम् । यत्तु "त्रिदोषापकर्षणम्—" इति सुश्रुतेनोक्तं तत् संस्कारेण कफहरत्वादिति ज्ञेयम्; अत एव चरकेऽपि "संस्कारात्तु जयेत् कफम्—" इत्युक्तम् । योगवाहीति यैर्यैर्द्रव्यैः संस्क्रियते तेषां तेषामेव गुणानावहतीत्यर्थः । सर्वथा मधुरमिति रसे पाके च मधुरमित्यर्थः । तथा सर्वथा हिमवन्निपातेऽधिवासे च शीतमित्यर्थः, न तु काञ्जिकादिवत् निपातमात्रे शीतमित्यर्थः ॥ ४० ॥—

**गव्यं घृतं घृतश्रेष्ठं चक्षुष्यं बलवर्धनम् ॥ ४१ ॥**

**विपाके मधुरं श्रेष्ठं वातपित्तविषापहम् ॥**
**माहिषं तु घृतं स्वादु पित्तास्रानिलनुद्धिमम् ॥ ४२ ॥**
**छागं घृतं तु चक्षुष्यं लघ्वग्निवलघ्ववर्धनम् ॥**

इदानीं विशिष्टघृतगुणमाह—गव्यमित्यादि । अत्र सामान्यगुणाभिहितमधुरत्वादेः पुनरभिधानमुत्कर्षार्थम् । अत्र द्वितीयं श्रेष्ठमिति पदं चक्षुष्यमित्यादिषु सर्वत्रैव योज्यम् । श्रेष्ठमित्यतिशयेन चक्षुष्यमतिशयेन वलवर्धनमित्यादि ॥ ४१ ॥ ४२ ॥—

**आविकादीनि सर्पींषि बुद्ध्वा स्वक्षीरवद्वदेत् ॥ ४३ ॥**

अनुक्तसर्पिर्गुणमतिदेशेनाह—आविकादीनीत्यादि ॥ ४३ ॥

**सर्पिः पुराणं त्रिमलप्रतिश्यातिमिरापहम् ॥**
**मूर्च्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ ४४ ॥**

पुराणसर्पिर्गुणमाह—सर्पिरित्यादि । प्रतिश्याशब्दः प्रतिश्यायवचनः । पुराणघृतलक्षणं यथा,—उग्रगन्धं पुराणं स्याद् दशवर्षस्थितं घृतम् । लाक्षारसनिभं शीतं प्रपुराणमतः परम्—" इति । यथा यथा हि जीर्णत्वप्रकर्षस्तथा तथा गुणोत्कर्षः । उक्तं हि हारीते,—"यथा यथा जरां याति गुणवत् स्यात्तथा तथा—" इति ॥४४॥

**क्षीरघृतं तु संग्राहि तर्पणं नेत्ररोगनुत् ॥**

क्षीरोत्थितघृतगुणमाह—क्षीरघृतमित्यादि ॥—

**सर्पिर्मण्डः सरः स्वादुर्योनिश्रोत्रशिरोऽक्षिजान् ॥**
**गदान् जयति शोथघ्नो रूक्षस्तीक्ष्णस्तनुश्च सः ॥ ४५ ॥**

सर्पिर्मण्डगुणमाह—सर्पिर्मण्ड इत्यादि । सर्पिषस्तप्तस्य स्त्यानीभवदुपरितनो भागः सर्पिर्मण्डः ॥ ४५ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे क्षीरवर्गो नाम सप्तमो वर्गः समाप्तः ॥**

इति श्रीशिवदाससेन विरचितायां द्रव्यगुणसंग्रहटीकायां क्षीरवर्गो नाम सप्तमो वर्गः समाप्तः ।

---

तैलं संयोगसंस्कारात् सर्वरोगहरं स्मृतम् ॥
कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च ॥ १ ॥
पित्तलं बद्धविण्मूत्रं न च श्लेष्माभिवर्धनम् ॥
वातघ्नमुत्तमं बल्यं त्वच्यं मेधाग्निवर्धनम् ॥ २ ॥

जङ्गमस्नेहोत्तमं घृतमभिधाय स्थावरस्नेहोत्तमं तैलमाह—तैलमित्यादि । तैलमिति तिलोद्भवम् । संयोगसंस्कारादिति संयोगात् संस्काराच्चेत्यर्थः । संस्कारस्तैलस्य भेषजैः पाकः, संयोगस्त्ववचारणायां ज्ञेयः । सूक्ष्ममिति सूक्ष्मस्रोतोऽनुसारित्वात् । व्यवायीति अपक्वमेव सकलदेहव्यापकात् । त्वच्यमित्यभ्यङ्गात् । यत्तु वाग्भटे त्वग्दोषकरत्वमुक्तं तैलस्य तद्भक्षणाभिप्रायेणेति न विरोधः; अन्ये तु तत्रापि "त्वग्दोषहृत्—" इति पठन्ति, तत्तु न टीकाकृद्भिर्व्याख्यातम् ॥ १–२ ॥

सेकाभ्यङ्गावगाहेषु तिलतैलं प्रशस्यते ॥
तद्वस्तिषु च पानेषु नस्ये कर्णाक्षिपूरणे ॥ ३ ॥
अन्नपानविधौ चापि प्रयोज्यं वातशान्तये ॥
तैलमेरण्डजं तिक्तं कटु स्वादुरसं गुरु ॥ ४ ॥
ब्रध्नगुल्मानिलकफानुदरान् विषमज्वरम् ॥
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥ ५ ॥
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥
सार्षपं कटु तीक्ष्णोष्णं कफशुक्रानिलापहम् ॥ ६ ॥
लघु पित्तास्रकृत् कोठकुष्ठार्शोव्रणजन्तुजित् ॥

तिलतैलगुणानाह—सेकेत्यादि । अन्नपानविधौ अन्नपानसंस्कारे ॥ ३–६ ॥—

उमाकुसुम्भजं तूष्णं त्वग्दोषकफपित्तकृत् ॥ ७ ॥

उमादितैलगुणानाह—उमेत्यादि । उमा अतसी ॥ ७ ॥

करञ्जनिम्बतैलं तु नात्युष्णं कफपित्तजित् ॥
तिक्तं क्रिमिहरं तैलं शेषं योनिवदादिशेत् ॥ ८ ॥

करञ्जादितैलगुणानाह—तिक्तमित्यन्तः करञ्जनिम्बयोस्तैलगुणः । तैलमित्यादिना तु अनुक्ततैलगुण उक्तः ॥ ८ ॥

सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते ॥

स्थावरस्नेहेषु तिलतैलप्राधान्यमाह—सर्वेभ्य इत्यादि ॥—

**निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि ॥ ९ ॥**

ननु, तैलपदे तैलत्वं प्रवृत्तिनिमित्तं, तच्च न तावत्तिलोद्भवत्वं, सर्षपतैलादावव्याप्तेः; नापि बीजप्रभवत्वं, तद्गतरूपादावतिव्याप्तेः; नापि बीजप्रभवस्नेहत्वं, सारतैलादावव्याप्तेः; अपि च बीजप्रभवस्नेहत्वं न तावत् स्नेहरूपगुणवृत्तिः, तैलं गन्धवदिति प्रत्ययस्य सर्वजनसाधारणस्य भ्रान्तित्वापत्तेः; नापि स्नेहाश्रयद्रव्यवृत्तिः, बीजद्रवमात्रस्यैव तैलत्वापत्तिरिति अनुपपत्तिं हृदि निधाय सर्षपादिस्नेहेष्वपि तैलशब्दं व्युत्पादयन्नाह—निष्पत्तेरित्यादि । तिले यथा तैलं निष्पद्यते चूर्णीकरणयन्त्रपातनादिना तथा सर्षपादावपि स्नेहाकर्षणात्; भवति च समाननिष्पत्तिकतया तच्छब्दता, यथा वितुषे धान्ये तण्डुलशब्दो वृत्तः स वितुषे विडङ्गेऽपि वर्तते, यथा–विडङ्गतण्डुला इति, तद्गुणत्वेन तच्छब्दता, यथा–गौर्वाहिक इति; तद्गुणत्वं च सुश्रुतेनोक्तं, यथा,—"यावन्तः स्थावराः स्नेहाः समासात् परिकीर्तिताः । सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः"—इति । एतेन तिलस्य विकारस्तैलमिति योगे बाधकाभावात्, तिलप्रभवस्नेह एव तैलपदप्रयोगात् स्नेहत्वेऽपि शक्तेस्तैलपदं योगरूढम् । सार्षपादौ तु तैलपदप्रयोगो भाक्त इति भावः । अन्ये तु गन्धरसविशेषाभिव्यङ्ग्यं तैलत्वं जातिः । अत एव घृततैलसंशये गन्धरसविशेषनिश्चयात् तैलत्वनिश्चय इति सार्षपस्नेहादीनामपि तैलत्वमित्याहुः ॥ ९ ॥

**वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥**
**मांसानुरूपगन्धौ च विद्यान्मेदोऽपि ताविव ॥ १० ॥**

स्नेहत्वसामान्याद्वसादीनामपि गुणमाह–वसेत्यादि ॥ १० ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे**
**तैलवर्गो नामाष्टमो वर्गः समाप्तः ।**

इति श्रीशिवदाससेन विरचितायां द्रव्यगुणसंग्रहटीकायां तैलवर्गो नामाष्टमो वर्गः समाप्तः ।

---

**इक्षो रसो हिमो वृष्यस्तर्पणो जीवनः सरः ॥**
**वातासृक्पित्तजित् स्वादुः स्निग्धः प्रीणनबृंहणः ॥ १ ॥**
**रसो दन्तकृतः श्लेष्मकारणं न विदाहवान् ॥**

माधुर्यसामान्यात् क्षीरवर्गमनु इक्षुविकृतिवर्गेऽभिधातव्ये उपोद्घातागतेन तैलवर्गेण व्यवधानं कृतम् । संप्रति यथोक्तोपोद्घातागतं तैलवर्गमभिधाय प्रकृतमिक्षुविकृतिवर्गमाह—इक्षोरित्यादि । दन्तकृत इति दन्तपीडनेन कृतः ॥ १ ॥–

**यान्त्रिकस्तु विदाही स्याद्गुरुस्त्वगग्रन्थियोगतः ॥ २ ॥**

यान्त्रिक इति यन्त्रपीडनेन कृतः । ननु, यान्त्रिकस्य इक्षुरसस्य विदाहित्वे सति रक्तपित्तहरत्वं यत् तद्विरुध्यते । यथा,—"मधूदकस्येक्षुरसस्य चापि पानाच्छमं गच्छति रक्तपित्तम्—" इति । तन्न, यतो दन्तनिष्पीडितस्यैवाविदाहिनो रक्तपित्ते ग्रहणं भविष्यति; किंवा यान्त्रिकस्यापि विदाहकारणत्वगादिसंयोगादेस्त्यागं कृत्वोपयोगः कार्यः । तेन यान्त्रिकस्तु विदाहीति वचनं प्रायोवादमाश्रित्य बोध्यम् । अन्ये त्वेतद्दोषभिया विदाहीति शीघ्रपाकीति व्याख्यानयन्ति ॥ २ ॥

**अतीव मधुरो मूले मध्ये मधुर एव च ॥**
**अग्रे चाक्षिषु विज्ञेय इक्षूणां लवणो रसः ॥ ३ ॥**

इक्षूणामवयवविशेषेण गुणविशेषमाह—अतीवेत्यादि । अक्षिष्विति ग्रन्थिषु, चन्द्रिकाकारस्तु इक्षूणामक्षिषु सर्वसन्धिषु प्ररोहजननसमर्था अङ्कुरा इत्याह । अन्ये त्वक्षु चेति पठन्ति, तत् सुबोधम् ॥ ३ ॥

**पक्को रसो गुरुः स्निग्धः सतीक्ष्णः कफवातजित् ॥**

पक्कस्येक्षुरसस्य गुणमाह—पक्क इत्यादि । सतीक्ष्ण ईषत्तीक्ष्ण इत्यर्थः ॥—

**फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रलम् ॥ ४ ॥**

फाणितगुणानाह—फाणितमित्यादि । फाणितं तन्तुलीभूतो रसः, अस्यैव तन्त्रान्तरे क्षुद्रगुड इति संज्ञा । तदुक्तं—"क्षुद्रो गुडश्चतुर्भागावशेषितः—" इति ॥ ४ ॥

**रूक्षं मधूकपुष्पोत्थं फाणितं त्वथ वातहृत् ॥**
**कफदं मधुरं पाके कषायं वस्तिदूषणम् ॥ ५ ॥**

फाणितप्रसङ्गान्मधूकपुष्पकृतफाणितगुणमाह—रूक्षमित्यादि ॥ ५ ॥

**गुडो वृष्यो गुरुः स्निग्धः सक्षारो मूत्रशोधनः ॥**
**नातिपित्तहरो मेदःकफक्रिमिबलप्रदः ॥ ६ ॥**

इक्षुरसस्यैव पाकादतिघनभावं गतस्य गुडसंज्ञा, तस्य गुणमाह—गुड इत्यादि । सक्षार इति क्षारसहचरितलवणरसः क्षारशब्देनोच्यते । स्वामिदासादयस्तु व्याख्यातारः क्षाराधिकारे क्षारस्य रसत्वमेव मन्यन्ते । तत्तु न सम्यक्, सर्वतन्त्रविरोधात् । उक्तं हि चरके,—"क्षरणात् क्षारो नासौ रसो द्रव्यम्—" इति । नातिपित्तहर इति मधुरत्वेऽपि सलवणत्वात् ॥ ६ ॥

**पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः ॥**

अपहृतमलत्वेन शुद्धो यो गुडस्तस्य गुणमाह—पित्तघ्न इत्यादि । शुद्धो मलापगमनेन धवल इत्यर्थः ॥—

**स पुराणोऽधिकगुणो गुडः पथ्यतमः स्मृतः ॥ ७ ॥**

पुराणगुडस्य गुणमाह—स इत्यादि । पथ्यतम इति गुडान्तरापेक्षया; चन्द्रिकाकारस्तु पथे स्रोतसे हितः पथ्यः, पथ्यतमः सर्वेषां स्रोतोहितानां श्रेष्ठ इत्यर्थः । पथ्यतमस्तु जीर्णत्वेन रौक्ष्यलाघवादिगुणयोगात् । अत एवोक्तं गुणाधिक इति ।—गुणाश्चात्र स्रोतःशोधनाधिकारिण एव रौक्ष्यलाघवादयो न तु स्नेहादयः, "पुराणं प्रायशो रूक्षं प्रायेणाभिनवं गुरु—" इति युक्तिविरोधात्, अप्रस्तुतत्वात्, स्नेहादीनां स्रोतःशुद्ध्यकरणत्वाच्चेति व्याचष्टे । डल्हणस्तु स पुराण इत्यस्य ईषत् पुराण इत्यर्थं व्याख्यातवान् ॥७॥

**खण्डं वृष्यतमं बल्यं चक्षुष्यं बृंहणं तथा ॥**
**वातपित्तहरं नातिस्निग्धं हृद्यं सुखप्रदम् ॥ ८ ॥**

तस्यैव गुडस्य संस्कारान्तरेण नामान्तरं गुणान्तरं च निर्दिशन्नाह—खण्डमित्यादि ॥ ८ ॥

**शर्करा वातपित्तास्रङ्मूर्च्छाच्छर्दिविषापहा ॥**

शर्करागुणानाह—शर्करेत्यादि । अत्र शर्कराशब्दः सामान्यवचनः । तेन यासशर्करामधुशर्करागुडशर्कराणामेवायं गुण इति बोध्यम् ॥—

**तमराजस्तु तृष्णाघ्नो ज्वरदाहास्रपित्तजित् ॥ ९ ॥**

तमराजः शर्कराभेद इति डल्हणः ॥ ९ ॥

**वृष्या क्षीणक्षतहिता सस्नेहा गुडशर्करा ॥**

गुडशर्करागुणमाह—वृष्येत्यादि । गुडपदं यासशर्करामधुशर्करयोर्व्यवच्छेदार्थम् ॥—

**मधुजा शर्करा रूक्षा तृष्णाच्छर्द्यतिसारनुत् ॥ १० ॥**

मधुशर्करागुणमाह—मधुजेत्यादि । मधुनः कालान्तरावस्थानादतिघनीभूतमवयवं मधुशर्करेति वदन्ति ॥ १० ॥

**तद्गुणा तिक्तमधुरा सस्नेहा यासशर्करा ॥**

यासशर्करागुणमाह—तदित्यादि । दुरालभाक्काथस्य घनीभावाद् यासशर्करेत्युच्यते ॥—

**गुडमत्स्यण्डिकाखण्डशर्करा विमलाः परम् ॥ ११ ॥**

गुडादीनामुत्तरोत्तरं नैर्मल्यातिशयमाह—गुडेत्यादि । परमित्युत्तरोत्तरं विमलाः । तेन गुडापेक्षया मत्स्यण्डिका विमला, मत्स्यण्डिकापेक्षया खण्डो विमलः, खण्डापेक्षया च शर्करा इति । मत्स्यण्डिकाश्च खण्डमध्ये कृत्रिमाः पाकादिना निष्पन्नत्वात् शङ्कुकृतयोऽतिकठिना भवन्ति ॥ ११ ॥

**यथा यथैषां वैमल्यं मधुरत्वं तथा तथा ॥
स्नेहगौरवशैत्यानि सरत्वं च तथा तथा ॥ १२ ॥**

एतेषामेव यथा यथा वैमल्यप्रकर्षस्तथा तथा माधुर्यादिप्रकर्षोऽपीत्याह–यथेत्यादि। अत्र गौरवस्थाने केचिल्लाघवं पठन्ति, वदन्ति च—लाघवं हि गुणः प्रशस्तो न गौरवं, उत्तरोत्तरं च प्राशस्त्यमेषामुक्तम्। किंतु यथा यथा सारत्वं भवति तथा तथा गौरवमप्युपपन्नम् ॥ १२ ॥

**मधु स्वादुरसं शीतं व्रणशोधनरोपणम् ॥
कषायानुरसं रूक्षं बल्यं दीपनलेखनम् ॥ १३ ॥
संधानं लघु चक्षुष्यं स्वर्यं हृद्यं त्रिदोषनुत् ॥
श्वासहिक्काविषहरमुष्णं खाम्बुविरोधि च ॥ १४ ॥**

माधुर्यसामान्यात् मधुशर्कराप्रसङ्गाच्चानन्तरं मधुगुणाभिधानं, तस्य सामान्यगुणमाह–मध्वित्यादि। संधानमिति भग्नादिसंधानकरम्। ननु, अत्र लघ्विति पठ्यते तथा त्रिदोषप्रशमनमिति तथाच चरकविरोधः, तत्र हि "वातलं गुरु शीतं च रक्तपित्तापहं मधु—" इति पठति, एवं वाग्भटेऽपि "व्रणशोधनसन्धानरोपणं वातलं मधु—" इति पठ्यते। सत्यं, तत्र यल्लघुत्वमुक्तं तत् पुराणमध्वपेक्षया। इदं हि वचनं सौश्रुतं, सुश्रुते च पुराणमेव मध्वधिकृतम्। यथा,—"विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम्—" इति (सु. सू. स्था. अ. ४५)। तेनाधिकृतत्वात् पुराणमधुन एवैते गुणा ज्ञेयाः। चरके तु पुराणादिविशेषमनादृत्य गुरुत्वमुक्तम्। चक्रस्तु लघ्विति लघुपाकमिति व्याख्याय विरोधं परिहरति। त्रिदोषप्रशमनत्वं चास्य प्रभावान्मिलितत्रिदोषारब्धव्वरहरतया ज्ञेयम्। पृथग्वातजननं तु चरकवाग्भटाभ्यामुक्तमतो न विरोधः। त्रिदोषहरत्वे उपपत्तिरपि दर्शिता सुश्रुतेन, यथा,–"तत्तु लघुत्वात् कषायानुरसत्वाच्च कफघ्नं, पैच्छिल्यात् माधुर्यात् कषायानुरसत्वाच्च वातपित्तघ्नम्—" इति (सु. सू. स्था. अ. ४५)। न च दृष्टकारणत एव त्रिदोषहरत्वोपपत्तौ प्रभावकल्पनमयुक्तमिति वाच्यं, प्रभावमन्तरेण मिलितत्रिदोषारब्धविकारहरणनियमानुपपत्तेः। विषहरमिति विषान्वयसंभवत्वेऽपि विषहरत्वमस्य प्रभावात्। अत एवोक्तं चरके,—"विषं विषघ्नमुक्तं यत् तत् प्रभावप्रभावितम्—" इति (च. सू. स्था. अ. २६) केचिदनयैवानुपपत्त्या वमिहरमिति पठन्ति। तन्न, सुश्रुतेऽपि विषप्रशमनमित्युक्तत्वात्। उष्णखाम्बुविरोधीति उष्णेन खाम्बुना च विरुध्यते। सुश्रुते च उष्णविरोधे उपपत्तिरपि दर्शिता, यथा,—"तत् सौकुमार्याच्च तथैव शैत्यान्नानौषधीनां रससंभवाच्च। उष्णे विरुध्येत विशेषतस्तु तथान्तरीक्षेण जलेन चापि—" इति (सु. सू. स्था. अ. ४५) सौकुमार्यादिति सुकुमारं हि उष्णे विरुध्यते, नवनीतस्त्यानघृतजलकुसुमवत्, तथैव शैत्यादिति शीतस्य स्वभावत

एव उष्णविरोधात्, नानौषधीनां रससंभवाच्चेति विरुद्धरसवीर्यनानाद्रव्यपुष्पस्य रसेन द्रवेण संभवादुत्पत्तेरित्यर्थः । खाम्बुना शीतेनापि मधुनो विरोधित्वे द्रव्यस्वभावमात्रं हेतुः । उष्णविरोधश्चोष्णस्पर्शैरेव नोष्णवीर्यैः; तेनोष्णवीर्यत्रिकटुकादिना मधु न विरुध्यते । एतच्चोष्णविरोधित्वमार्घ्यं मधु विहाय बोध्यं, तस्य विषान्वयत्वासंभवात् । अत एवोक्तं भोजे,—"मधून्युष्णैर्विरुध्यन्तेऽन्यत्रार्घ्यात्"—इति ॥ १३ ॥ १४ ॥

**माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः ॥**
**माक्षिकं प्रवरं तेषां विशेषाद्भ्रामरं गुरु ॥ १५ ॥**

यद्यपि सुश्रुतेऽष्टविधं मधूक्तम् । यथा,—"पौत्तिकं भ्रामरं क्षौद्रं माक्षिकं छात्रमेव च । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः"—इति (सु. सू. स्था. अ. ४५) तथापि मधुनश्चतुर्विधत्वमेव सर्वजनप्रसिद्धमिति कृत्वा चरकवचनमुपन्यस्यति । पिङ्गला मक्षिका महत्यः पुत्तिकास्तद्भवं पौत्तिकम् । भ्रामराः प्रसिद्धाः । मक्षिका एव स्वल्पाः पिङ्गलाः क्षुद्रास्तद्भवं क्षौद्रम् । तद्विधा एवास्वल्पा मक्षिकास्तद्भवं माक्षिकम् ॥ १५ ॥

**माक्षिकं तैलवर्णं स्याद्घृतवर्णं तु पौत्तिकम् ॥**
**क्षौद्रं तु कपिलं विद्यात् श्वेतं भ्रामरमुच्यते ॥ १६ ॥**

माक्षिकादिज्ञानार्थं वर्णविशेषानाह—माक्षिकमित्यादि ॥ १६ ॥

**बृंहणीयं मधु नवं नातिश्लेष्महरं सरम् ॥**
**मेदःस्थौल्यापहं ग्राहि पुराणमतिलेखनम् ॥ १७ ॥**
**दोषत्रयहरं पक्वमाममम्लं त्रिदोषकृत् ॥**

तस्यैव मधुनोऽवस्थाविशेषेण गुणभेदमाह—बृंहणीयमित्यादि । पक्वमित्यग्निसंपर्कादेव मधु गृह्णन्ति; अन्ये तु मधुनः पाको नास्तीति कृत्वा मध्वाधारस्यैव भूरिकालेन स्वयं सुसंजातत्वं पक्वत्वं, स्वल्पकालावस्थानाच्चामत्वं वदन्ति ॥ १७ ॥–

**तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् ॥ १८ ॥**

मधुनो योगवाहितामाह—तदित्यादि । अत्र केचित् 'नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु'—इति पठन्ति, तन्मतेऽपीयमेवोपपत्तिः प्रभावसहिता मधुनो योगवाहित्वे हेतुः । प्रभावात्तु नानाद्रव्यात्मकत्वेऽपि मद्यादीनां न योगवाहित्वम् । योगवाहितया च येन येन वाजीकरणरसायनदोषहरणादिना युज्यते तस्य तस्यैव कर्म करोतीति भावः ॥ १८ ॥

**उष्णेन मधु संयुक्तं वमनेष्ववचारितम् ॥**
**अपाकादनवस्थानान्न विरुध्येत पूर्ववत् ॥ १९ ॥**

इदानीं विषयविशेषे मधुन उष्णेनाप्यविरोधमाह—उष्णेनेत्यादि । वमनेष्विति अचिरावस्थायिभेषजोपलक्षणम् । तेन बस्तावप्यविरोधो ज्ञेयः । विरेचने तु चिरावस्थानाद्विरुध्यत एव । पूर्ववदिति सौकुमार्यादिहेतोः । पूर्वस्मादिव नात्र विरोध इत्यर्थः॥१९॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे इक्षुविकृतिवर्गो नाम नवमो वर्गः समाप्तः ॥**

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां इक्षुविकृतिवर्गो नाम नवमो वर्गः समाप्तः ॥

---

**सर्वं पित्तकरं मद्यमम्लं दीपनपाचनम् ॥**
**भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम् ॥ १ ॥**
**पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम् ॥**
**विकासि सृष्टविण्मूत्रं निद्राभावप्रसक्तिनुत् ॥ २ ॥**

इदानीं मधुगुडयोनित्वात् तथा मधुशब्दाभिधेयत्वाच्च मद्यस्य तदनन्तरं मद्यवर्गमाह—सर्वमित्यादि । यद्यपि मार्द्वीकमाध्वीकादिमद्यं साक्षादप्रतीयमानाम्लरसं तथापि अम्लकार्यदन्तहर्षमुखस्रावकारित्वेन अम्लानुरसत्वेन चाम्लत्वमिह ज्ञेयम् । यत्तु वाग्भटे,—"सस्वादुतिक्तकटुकमम्लपाकरसं सरम् । सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु"—इति (वा. सू. स्था. अ. ६) पञ्चरसत्वमुक्तम्, तन्मतेऽप्यम्लानुरसता इतररसानां ज्ञेया । उक्तं हि,—"सर्वेषां मद्यमम्लानामुपर्युपरि वर्तते'—इति । इन्द्रियबोधनमिति इन्द्रियपाटवकरमिति डल्हणः । निद्राभावप्रसक्तिनुदिति निद्राया अभावं नाशं, तथा निद्राया अतिप्रसक्तिं च नुदति । अतएवोक्तमन्यत्र,—"नष्टनिद्रातिनिद्राये हितं पित्तास्रदूषणम्"—इति ॥ १ ॥ २ ॥

**स्तन्यरक्तक्षयहिता सुरा दीपनबृंहणी ॥**
**कार्श्यार्शोग्रहणीदोषमूत्राघातानिलापहा ॥ ३ ॥**

सुरागुणमाह—स्तन्येत्यादि । सुरात्र लोहितवर्णा ॥ ३ ॥

**कासार्शोग्रहणीदोषप्रतिश्यायविनाशिनी ॥**
**श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा ॥ ४ ॥**

कातोलीति प्रसिद्धायाः श्वेतसुराया गुणमाह—कासार्श इत्यादि ॥ ४ ॥

**छर्द्यरोचकहृत्कुक्षितोदशूलप्रमार्दिनी ॥**
**प्रसन्ना गुल्मवातार्शोविबन्धानाहनाशिनी ॥ ५ ॥**

प्रसन्नागुणमाह—छर्दीत्यादि । प्रसन्ना मद्यस्योपरि अच्छो भागः, अन्ये तु मद्यमेव भेषजयोगात् प्रसन्नं प्रसन्नामाहुः ॥ ५ ॥

**पित्तलाल्पकफा रूक्षा यवैर्वातप्रकोपणी ॥**
**विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ॥ ६ ॥**

यवगोधूमकृतसुरयोः क्रमाद्गुणमाह—पित्तलेत्यादि । गुर्वीत्यन्तो यवसुरागुणः । यवैरित्यनन्तरं कृतेति शेषः । श्लेष्मला तु मधूलिकेति गोधूमसुरागुणः । मधूलकः स्वल्पगोधूमः । तत्कृतक्लिन्नभागा सुरा मधूलिका । अन्ये तु मधूलकं मर्कटहस्ततृणं तत्फलक्लिन्नकृता मधूलिकेत्याहुः । जेज्जटस्तु मधूलकपुष्पसंभवं मद्यं मधूलिकामाह ॥६॥

**रूक्षा नातिकफा वृष्या पाचनी वल्कली सुरा ॥**

वल्कलीति प्रसिद्धसुरागुणमाह—रूक्षेत्यादि । बिभीतककृता सुरा वल्कली; अतएव केचिद्वल्कलीस्थाने आक्षिकीति पठन्ति । अक्षो बिभीतकः ॥—

**कोहलो भेद्यवृष्यश्च त्रिदोषो वदनप्रियः ॥ ७ ॥**

कोहलाख्यमद्यगुणमाह—कोहल इत्यादि ।—यवशक्तुकिण्वकृतं मद्यं कोहलः, अन्ये तु पौण्ड्रदेशप्रसिद्धां सुरां काञ्चिमानिकामाहुः ॥ ७ ॥

**ग्राह्युष्णो जगलः प्रोक्तो रूक्षस्तृट्कफशोथनुत् ॥**
**हृद्यः प्रवाहिकाटोपदुर्नामानिलशोथनुत् ॥ ८ ॥**

जगलो भक्तकिण्वकल्कीकृता सुरा, तस्या गुणमाह—ग्राहीत्यादि ॥ ८ ॥

**वक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः ॥**

भेदकशब्दव्यवह्रियमाणवक्कसगुणमाह—हृद्य इत्यादि ॥—

**शीधुः पित्तानिलहरः श्लेष्मस्नेहविकारहा ॥ ९ ॥**
**मेदःशोथोदरार्शोघ्नो बल्यः पक्वरसो मतः ॥**

पक्वेक्षुरसकृतशीधुगुणमाह—शीधुरित्यादि । पक्वरसः क्वथितेक्षुरसेषु यः क्रियते ॥९॥—

**जरणीयो विबन्धघ्नः स्वरवर्णविशोधनः ॥ १० ॥**
**लेखनः शीतरसिको हितः शोफोदरार्शसाम् ॥**

अपक्वेक्षुरसकृतशीधुगुणमाह—जरणीय इत्यादि । शीतरसिकोऽपक्वेक्षुरसकृतः ॥१०॥—

**गौडः शीधुः कषायः स्यात् स्वादुः पाचनदीपनः ॥ ११ ॥**

गुडकृतशीधुगुणमाह—गौड इत्यादि ॥ ११ ॥

**शार्करो मधुरो हृद्यो दीपनो बस्तिशोधनः ॥**
**वातघ्नो मधुरः पाके रुच्य इन्द्रियबोधनः ॥ १२ ॥**

शर्कराकृतशीधुगुणमाह—शार्कर इत्यादि । इन्द्रियबोधन इन्द्रियपाटवजनकः ॥१२॥

**शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः ॥**
**रूक्षः कषायः कफहा वातपित्तप्रकोपणः ॥ १३ ॥**

मधुकपुष्पकृतशीधुगुणमाह—शीधुरित्यादि। अयं तु न गुडयोनिः ॥ १३ ॥

**जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः ॥**

जम्बुफलरसगुडादिकृतशीधुगुणानाह—जाम्बव इत्यादि। बद्धनिष्यन्दो बद्धमूत्रः। तुवर इति कषायः। तौवर इति पाठे तौवर इति जाम्बवविशेषणं वदन्ति; जम्बुफलरसतुवरीक्वाथगुडादिकृतः शीधुरित्यर्थः ॥—

**तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥ १४ ॥**
**मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः ॥**

इदानीं पृथङ्मधुगुडपिष्टयोनिमद्यान्यभिधाय मध्वादियोनिमेलकनिष्पाद्यं किंचिदौषधयुक्तं मद्यमासवसंज्ञकं निर्दिशन्नाह—तीक्ष्ण इत्यादि। सुरा पैष्टी सैव यत्र तोयकार्यं करोति स सुरासवः ॥ १४ ॥—

**तीक्ष्णः कषायो मदकृद् दुर्नामकफगुल्मनुत् ॥ १५ ॥**
**क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः ॥**

मैरेयगुणमाह—तीक्ष्ण इत्यादि। मैरेयलक्षणं यथा,—"आसवस्य सुरायाश्च द्वयोरेकत्र भाजने। संधानं तद्विजानीयात् मैरेयमुभयाश्रयम्"—इति ॥ १५ ॥—

**निर्दिशेद् द्रव्यतश्चान्यान् कन्दमूलफलासवान् ॥ १६ ॥**

अनुक्तासवगुणज्ञानार्थमाह—निर्दिशेदित्यादि। द्रव्यत इति द्रव्यगुणतो वीक्ष्य, कन्दाद्युपलक्षणं; तेन काण्डत्वक्पल्लवा अपि ग्राह्याः ॥ १६ ॥

**नवं मद्यमभिष्यन्दि दोषकृज्जीर्णमन्यथा ॥**

मद्यस्याल्पकालत्वादिना अपरिणतस्य तथा चिरकालत्वादिना परिणतस्य दोषगुणानाह—नवमित्यादि। जीर्णमिति कालेन परिपक्वम् ॥—

**अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः ॥ १७ ॥**
**बहुदोषहरश्चैव रोगाणां शमनश्च सः ॥**
**दीपनः कफवातघ्नः सरः पित्ताविरोधनः ॥ १८ ॥**
**शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥**

अरिष्टगुणमाह—अरिष्ट इत्यादि। अरिष्टशब्देन इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादिभूरिभेषजक्वाथादिसंस्कारवत् मद्यमभिधीयते। द्रव्यसंयोग इति अभयाचित्रकादिद्रव्यसंयोगः। संस्कारस्तु भेषजक्वथनभाजनसंस्कारयवराशिस्थापनादिः। अधिकगुणत्वमेवाह—बह्वित्यादि। बहुदोषहर इत्यस्य भाष्यं कफवातघ्नः पित्ताविरोधेन इति।

नञ् ईषदर्थे । रोगाणां शमन इत्यस्य तु भाष्यं शूलाध्मानेत्यादि । तेन न पौनरुक्त्यम् । किंवा शेषार्थमेतद्वचनमित्याहुः । दोषाणां शमन इति पाठेऽपि दोषशब्दो रोगवचन एवेति ज्ञेयम् ॥ १७ ॥ १८ ॥–

**अरिष्टासवशीधूनां गुणान् कर्माणि चादिशेत् ॥ १९ ॥**
**बुद्ध्वा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक् ॥**

अरिष्टप्रसङ्गेनासवशीधूनामपि बहुप्रपञ्चेनेहानुक्तानां गुणज्ञानार्थमाह–अरिष्टेत्यादि । संस्कारमवेक्ष्येति संस्कारद्रव्यगुणान् बुद्ध्वा ॥ १९ ॥–

**सान्द्रं विदाहि दुर्गन्धि विरसं क्रिमिलं गुरु ॥ २० ॥**
**अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥**
**अल्पौषधं पर्युषितमत्यच्छं पिच्छिलं च यत् ॥ २१ ॥**
**तद्वर्ज्यं सर्वथा मद्यं किंचिच्छेषं च यद्भवेत् ॥**

यादृशं मद्यं वर्ज्यं तदाह—सान्द्रमित्यादि । तरुणमिति मन्दजातम् । एतच्चोक्तमपि समुदितदोषाभिधानप्रस्तावात् पुनरुच्यते ॥ २० ॥ २१ ॥–

**चिरस्थितं जातरसं दीपनं कफवातजित् ॥ २२ ॥**
**रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥**

सेव्यं यन्मद्यं तदाह—चिरस्थितमित्यादि ॥ २२ ॥–

**शुक्तं बलाशपित्तासृक्क्लेदि वातानुलोमनम् ॥ २३ ॥**
**भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम् ॥**
**दीपनं शिशिरं स्पर्शे पाण्डुतृट्क्रिमिनाशनम् ॥ २४ ॥**

आसुतत्वसामान्यात् शुक्तादिगुणकर्मणी दर्शयन्नाह—शुक्तमित्यादि । शुक्तलक्षणं यथा,—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते"—इति । अत्रैव गुडादिमानं यथा,—"गुडमाक्षिकधान्याम्लमस्तु च द्विगुणं क्रमात् । शुक्तसिद्ध्यर्थमावाप्यं प्रायशः कटुकं च यत्"–इति ॥ २३ ॥ २४ ॥

**तद्वत्तदासुतं सर्वं रोचनं तु विशेषतः ॥**

शुक्तप्रक्षिप्तकन्दादिषु शुक्तगुणानतिदिशति—तद्वदित्यादि । शुक्तसंधानक्षिप्तमार्द्रककरीरादि; तद्वदिति शुक्तसमानगुणम् ॥—

**गौडानि रसशुक्तानि मधुशुक्तानि यानि च ॥ २५ ॥**
**यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥**

शुक्तस्य योनिभेदेन गुणमाह—गौडानीत्यादि । गौडानि गुडप्रकृतिशुक्तानि । रसशुक्तानि इक्षुरसकृतशुक्तानि । एतच्छुक्तत्रयज्ञानार्थपरिभाषा,—"गुडाम्बुना स-

तैलेन संधानं संस्कृतं तु यत् । कन्दशाकफलैर्युक्तं गुडशुक्तं तदुच्यते"—इति । गुड-शुक्तवदिक्षुरसशुक्तं ज्ञेयम् । "जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् । मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् । अहेण तज्जातरसं मधुशुक्तमुदाहृतम्"—इति ॥ २५ ॥–

**काञ्जिकं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ॥२६॥**
**भ्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥**
**शस्तमास्थापने हृद्यं लघुवातकफापहम् ॥ २७ ॥**
**गण्डूषधारणाद्वक्त्रमलदौर्गन्ध्यशोषजित् ॥**

काञ्जिकगुणमाह—काञ्जिकमित्यादि । पित्तकरस्यापि काञ्जिकस्य दाहशमकत्वं यत् सुश्रुतेनोक्तं तत् स्पर्शेनैव ज्ञेयम् । अन्ये तु यथा तक्रं कण्ठे कफं करोति उदरे तु हन्ति, प्रभावात्; तद्वदत्रापि पित्तकरस्यापि काञ्जिकस्य दाहहरत्वं प्रभावेणैव ज्ञेयमित्याहुः ॥ २६ ॥ २७ ॥—

**एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥ २८ ॥**
**क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ॥**

सौवीरतुषोदकयोर्गुणमाह—एभिरित्यादि । वितुषयवकृतं सौवीरं, सतुषयवकृतं तुषोदकम् ॥ २८ ॥—

**मूत्रं गोजाविमहिषगजाश्वोष्ट्रखरोद्भवम् ॥ २९ ॥**
**पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥**
**क्रिमिशोफोदरानाहशूलपाण्डुकफानिलान् ॥ ३० ॥**
**गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥**
**दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमम् ॥ ३१ ॥**

द्रव्यपारिशेष्यान्मूत्राण्याह—मूत्रमित्यादि । अत्र व्यवहारसिद्धत्वात् लोके वेदे च धेनुमूत्रमेव गृह्यते, न तु बलीवर्दस्य । अन्ये तु शुक्रसंबधेन गुरुत्वात् पुङ्गवमूत्रं न ग्राह्यमित्याहुः । तन्न, शुक्रसंबन्धस्य स्त्रीष्वपि प्रसक्तत्वात् । अपरे तु स्त्रीमूत्रं लघुत्वात् ग्राह्यमित्याहुः । तदप्ययुक्तं, येन सेकादौ वाते च मूत्रस्य गौरवमप्युपयुक्तं तस्माद्यथोक्तमेव श्रेय इति ॥ २९—३१ ॥

**गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् ॥**
**लघ्वग्निदीपनं मेध्यं पित्तलं कफवातनुत् ॥ ३२ ॥**
**गुल्मशूलोदरानाहविरेकास्थापनादिषु ॥**
**मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ ३३ ॥**

सामान्यगुणमभिधाय तेषां विशिष्टगुणमाह—गोमूत्रमित्यादि । अविशिष्टमूत्रप्रयोगे गव्यमूत्रमेव ग्राह्यमित्यर्थः ॥ ३२ ॥ ३३ ॥

**दुर्नामोदरशूलेषु कुष्ठमेहाविशुद्धिषु ॥**
**आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ ३४ ॥**
**कटु तिक्तान्वितं छागमीषन्मारुतकोपनम् ॥**
**सक्षारतिक्तकटुकमुष्णं वातघ्नमाविकम् ॥ ३५ ॥**

माहिषमूत्रगुणानाह—दुर्नामेत्यादि । अविशुद्धिर्वमनादीनाम् ॥ ३४ ॥ ३५ ॥

**आश्वं कफहरं मूत्रं वातचेतोविकारनुत् ॥**

आश्वमूत्रगुणानाह—आश्वमित्यादि । चेतोविकारौ उन्मादापस्मारौ ॥—

**तीक्ष्णं क्षारे किलासे च नागमूत्रं प्रयोजयेत् ॥ ३६ ॥**

नागमूत्रगुणानाह—तीक्ष्णमित्यादि । क्षार इति क्षारापाके ॥ ३६ ॥

**दीपनं गार्दभं मूत्रं गरचेतोविकारनुत् ॥**
**अर्शोघ्नं कारभं मूत्रं मानुषं तु विषापहम् ॥ ३७ ॥**

कारभमूत्रगुणमाह—अर्शोघ्नमिति । कारभमित्यौष्ट्रम् ॥ मानुषमूत्रगुणमाह—मानुषमित्यादि । मानुषमूत्रमबहुविषयतया उद्देशेनानुक्तमपि विषहन्तृतया अशून्यतार्थमुच्यते ॥ ३७ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे मद्यादिवर्गो नाम दशमो वर्गः समाप्तः ।**

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां मद्यादिवर्गो नाम दशमो वर्गः समाप्तः ।

---

**विधिना कृत आहारः प्रीणनो धातुपोषकः ॥**
**स्मृत्यायुःपुष्टिवर्णौजःसत्त्वोत्साहविवर्धनः ॥ १ ॥**

इदानीमुक्तानामेव धान्यादीनां संस्कारविशेषाहितं गुणमभिधातुं कृतान्नवर्ग आरभ्यते । कृतं करणनिष्पादितं यदन्नं पेयामण्डादि । ते च पेयादीनां गुणाः संस्कारसंयोगादिजाः, केचित् प्रकृता अपि । न च वाच्यं पेयादीनामेव गुणेन बाधितत्वात् शूकधान्यादीनां पृथग्गुणकथनमयुक्तमिति, यतः पेयादयो हि प्रकृतिगुणानुविधायिनः सन्तो गुणमावहन्ति; तेन यः कृतान्नस्य गुण उच्यते स यदि रक्तशाल्यादिप्रकृतावपि स्यात् तदा बलवान् स्यात्, अथ विपरीतगुणः स्यात् तदा कृतान्नगुणस्याल्पत्वं स्या-

दिति एषोऽर्थः प्रागेव प्रपञ्चित इति नेहोच्यते । अत्राहारसामान्यगुणमाह–विधिनेत्यादि। विधिनेति वक्ष्यमाणविधिना ॥ १ ॥

**ओदनः क्षालितः स्विन्नः प्रस्नुतो विशदो लघुः ॥**
**भृष्टतण्डुलजोऽत्यर्थमन्यथा स्याद्गुरुश्च सः ॥ २ ॥**

आहारगुणमभिधाय ओदनस्य प्रायेण सर्वजनोपयोज्यत्वात् प्रथमं तद्गुणमाह–ओदन इत्यादि । क्षालित इति प्रक्षालिततण्डुलकृतः । स्विन्न इत्युत्स्विन्नधान्यतण्डुलकृतः, किंवा सम्यक् स्विन्नत्वेन मृदुभूतः । प्रस्नुत इति प्रश्च्योतितद्रवभागः । विशद इति स्वभावेन, तथा कण्डनेन च शुक्लं यत्तण्डुलं तत्कृतः । एवम्भूत ओदनो लघुर्भवति । भृष्टतण्डुलजस्तु अत्यर्थं लघुः । अन्यथा इति क्षालितादिविपर्ययो गुरुर्भवतीत्यर्थः ॥ २ ॥

**मण्डस्तु भूरिदोषघ्नो दीपनोऽनिलनाशनः ॥**
**ज्वरहा परमो बल्यः स्वेदनो मार्गशोधनः ॥ ३ ॥**

मण्डगुणमाह–मण्ड इत्यादि । मार्गशोधन इति स्रोतःशुद्धिकरः ॥ ३ ॥

**लाजमण्डो विशुद्धानां पथ्यः पाचनदीपनः ॥**
**वातानुलोमनो हृद्यः पिप्पलीनागरान्वितः ॥ ४ ॥**

लाजमण्डगुणानाह—लाजमण्ड इत्यादि । अत्र पाचनत्वं मण्डस्य दोषशेषं विना नोपपद्यते, सम्यक् शुद्धौ च दोषशेषो नोपपद्यते इति विरोधं पश्यन् अकारप्रश्लेषादविशुद्धानां पाचन इति कश्चिदाह । तन्न, चरकविरोधात् । तत्र हि "क्षुत्पिपासापहः पथ्यः शुद्धानां तु मलापहः—" ( च. सू. स्था. अ. २७ ) इत्युक्तम् । न च तत्रापि शुद्धानां मलापह इत्यनुपपत्त्या शुद्धानामित्यस्य ईषच्छुद्धानामित्यर्थो व्याख्येय इति वाच्यं, सम्यक् शुद्धानामपि घृतभाण्डावलेपन्यायेन कोष्ठोपलेपकदोषापहत्वेन मलापहत्वोपपत्तेः । तस्मात् सुश्रुतेऽपि यत् पाचनत्वमुक्तं लाजमण्डस्य तत् सति दोषशेषे इति ज्ञेयम् । सम्यक् शुद्धौ च पथ्यत्वदीपनत्वाभ्यामेवास्योपयोगः । अपि च मण्डोऽप्यतिद्रवा पेयैव, सा च ईषद्विशुद्धे निषिद्धा । यथा,—"कफपित्ते विशुद्धेऽल्पं मद्यपे वातपैत्तिके । तर्पणादिक्रमः कार्यः पेयाऽभिष्यन्दयेद्धि तान्"—इति । तेनाकारप्रश्लेषो न युक्त इति ॥ ४ ॥

**पेया स्वेदाग्निजननी वातवर्चोऽनुलोमनी ॥**
**क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ ५ ॥**

द्विधा हि यवागूः, पेयाविलेपीभेदात्; तत्र पेयागुणमाह–पेयेत्यादि ॥ ५ ॥

**विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥**
**व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥ ६ ॥**

विलेपीगुणमाह—विलेपीत्यादि ॥ ६ ॥

**यवागूर्ज्वरतृष्णाघ्नी लघ्वी बस्तिविशोधनी ॥**

विशिष्टयवागूगुणमभिधाय यवागूसामान्यगुणमाह—यवागूरित्यादि ॥—

**सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता ॥ ७ ॥**
**यवागूर्बहुसिक्था स्याद् विलेपी विरलद्रवा ॥**

उक्तानामेव मण्डादीनां लक्षणमाह—सिक्थकैरित्यादि । तत्र द्रवसिक्थसमन्विता यवागूरिति यवागूसामान्यलक्षणं; सा च द्विविधा, पेयाविलेपीभेदात्; मण्डस्तु यवाग्वा एवोपरितनो भागो न तु पृथङ्मण्डः साध्यते, आयुर्वेदशास्त्रे अदर्शितत्वात्; यस्तु क्वचिन्मण्डगुणो मण्डोपयोगो वा श्रूयते सोप्येवंरूप एव बोध्यः । ननु, मण्डो हि चतुर्दशगुणजलसाध्यः, यवागूस्तु षड्गुणसाध्या; यदुक्तम्,—"अन्नं पञ्चगुणे साध्यं विलेपी च चतुर्गुणे । मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि"—इति, तत्कथमुच्यते यवाग्वा एवोपरितनो भागो मण्ड इति? नैवं, तत्र यवागूशब्देन पेया विवक्षिता, अत एव पेयायाः पृथग् जलं नोक्तम् । द्रवसिक्थसमन्वितत्वं हि यवागूसामान्यलक्षणं; तेन चतुर्दशगुणसाध्यस्यापि मण्डस्य सिक्थसमन्वितावस्थायां यवागूत्वमेव; तेन सूक्तं यवाग्वा उपरितनो भागो मण्ड इति । पेया इति पातुं योग्या, एतेनान्वर्थसंज्ञया बहुद्रवत्वमल्पसिक्थत्वं च बोध्यम् । तेन सिक्थसमन्विता यवागूः पेयेति पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वं च लक्षणया बोध्यम् । तथा विरलद्रवा बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षणमवगन्तव्यम् । विरलद्रवा अल्पद्रवेत्यर्थः । तेन पेयाविलेपीव्यतिरेकेण यवागूः पृथङ् नास्तीत्याहुः । एतेन चरकवाग्भटसुश्रुतैरपि यवागूगुणः पृथङ्नोक्तः । यत्तु माधवचक्राभ्यां पेयाविलेपीगुणं पठित्वा यवागूगुणः पृथक् पठितः, तत्सामान्यगुणाभिप्रायेण सामान्यक्षीरगुणवदिति ज्ञेयम् ॥ ७ ॥—

**मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥ ८ ॥**
**यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥**

उक्तानामेव मण्डादीनामपेक्षिकं लाघवमाह—मण्डेत्यादि । यथापूर्वं लाघवमिति तेनौदनमपेक्ष्य लघ्वी विलेपी, ततोऽपि पेया, पेयातो मण्डो लघुतर इत्यर्थः । यद्यपि वातानुलोमनत्वं मण्डस्य पूर्वमुक्तं तथापि संपूर्णश्लोकानुरोधात् अत्र पुनः पठति । इदं हि वचनं वाग्भटस्य । अत्र यवाग्वादिसाधनपरिभाषाश्च सव्याख्याना अस्मदीयचरकतत्त्वदीपिकायामनुसन्धेया विस्तरभयाच्चेह नोक्ताः ॥ ८ ॥—

**पायसः कफकृद्बल्यो विष्टम्भी मेदुरो गुरुः ॥ ९ ॥**

विलेपीभेदस्य पायसस्य गुणमाह—पायस इत्यादि । क्षीरकृता हि विलेपी पायसः ॥ ९ ॥

कृशरा पित्तकफदा बल्या मारुतनाशिनी ॥

कृशरागुणमाह—कृशरेत्यादि। कृशरा तु तिलतण्डुलमाषकृता यवागूः। उक्तं हि,—"तिलतण्डुलमाषैस्तु कृशरा त्रिशयेति च" इति ॥—

अन्नं मांसादिभिः सार्धं सिद्धं स्याद्गुरु बृंहणम् ॥१०॥
रसौदनो ज्वरहरो बल्यो ग्राह्यनिलापहः ॥
घोलभक्तं श्रमार्शोघ्नं रुच्यं तर्पणदीपनम् ॥ ११ ॥
सद्योऽन्नं वारिणा धौतं शीघ्रपाकं बलप्रदम् ॥
शीतलं मधुरं रूक्षं श्रमघ्नं तर्पणं परम् ॥ १२ ॥
पानीयभक्तं व्युषितं मेदःस्वेदकफप्रदम् ॥
त्रिदोषकोपनं रूक्षं मलकृन्मूत्रलं परम् ॥ १३ ॥

अन्नस्य द्रव्यविशेषसंयोगाद्गुणविशेषं दर्शयन्नाह—अन्नमित्यादि ॥ त्रिदोषकोपनमित्युक्त्वापि कफप्रदमिति वचनं विशेषार्थम् ॥ १०–१३ ॥

सुस्विन्नो निस्तुषो भृष्ट ईषत्सूपो लघुर्हितः ॥

अन्नानन्तरं व्यञ्जनप्रधानं सूपमाह—सुस्विन्न इत्यादि। ईषद्भृष्ट इति संवधः। ये तु माषसूप इति पठन्ति ते मुद्गादिसूपानां प्रकृतिलाघवेनैव लघुत्वं लब्धं तेन गुरोरपि माषस्य सुस्विन्नत्वादिना लघुत्वमुच्यत इत्याहुः ॥—

स्विन्नं निष्पीडितं शाकं स्नेहसंस्कारितं हितम् ॥ १४ ॥
अस्विन्नं स्नेहरहितमपीडितमतोऽन्यथा ॥

सूचीकटाहन्यायेन व्यञ्जनप्रधानमांसात् पूर्वं शाकमाह—स्विन्नमित्यादि। अतः पूर्वोक्तात्। अन्यथेति अहितमित्यर्थः ॥ १४ ॥—

स्विन्नं मांसं कटु स्नेहगोरसाम्लफलैः सह ॥ १५ ॥
बृंहणं रोचनं बल्यं खालिष्कस्तु सदा गुरुः ॥

मांसव्यञ्जनानविशेषाणां गुणमाह—स्विन्नमित्यादि। खालिष्को वक्ष्यमाणपरिशुष्काख्यमांसव्यञ्जनभेदः; अन्ये तु वेशवाराख्यमांसव्यञ्जनभेद इत्याहुः ॥ १५ ॥—

तदेव गोरसादानं सुरभिद्रव्यसंस्कृतम् ॥ १६ ॥
विद्यात् पित्तकफोत्क्लेदि बलमांसाग्निवर्धनम् ॥

तस्यैव मांसस्य प्रदिग्धत्वेन प्रसिद्धस्य गुणमाह—तदित्यादि। आदानं घनद्रवावापः, गोरस एव आदानं यस्य तद्गोरसादानम् ॥ १६ ॥—

**परिशुष्कं स्थिरं स्निग्धं हर्षणं प्रीणनं गुरु ॥ १७ ॥**
**रोचनं बलमेधाग्निमांसौजःशुक्रवर्धनम् ॥**

तस्यैव मांसस्य परिशुष्कत्वेन प्रसिद्धस्य गुणमाह—परिशुष्कमित्यादि । परिशुष्कप्र-
दिग्धयोर्लक्षणं यथा,—"सिद्धं बहु घृते भृष्टं मुहुरुष्णाम्बुसेचितम् । जीरकाद्यैर्युतं मांसं
परिशुष्कं तदुच्यते । तदेव गोरसादानं प्रदिग्धमिति विश्रुतम्"—इति ॥ १७ ॥—

**तदेवोल्लुप्तपिष्टत्वादुल्लुप्तमिति भाषितम् ॥ १८ ॥**
**परिशुष्कगुणैर्युक्तं ज्ञेयं पथ्यतमं गुरु ॥**

परिशुष्कस्य शूल्यस्य प्रसङ्गेनाशेषशूल्यानामपि विशेषगुणमाह—तदित्यादि । तदेव
परिशुष्कमेव उल्लुप्तमिति भाषितम् सूदैरुल्लुप्तमिति संज्ञया परिभाषितम् । कुत इ-
त्याह—उल्लुप्तपिष्टत्वादिति "लुपॢ" छेदने, इत्यस्माद्भावे क्तः, उत्कर्षेणातिशयेन लुप्तं;
तेन प्रत्यवयवच्छेदनेन पिष्टमिव पिष्टं उल्लुप्तपिष्टम् । ज्ञेयं पथ्यतमं गुर्वित्यस्य स्थाने
केचिद्वह्नेः पक्वमतो लघ्विति पठन्ति । तन्मते अत इति परिशुष्कात् वह्नेः पक्वं यदुल्लुप्तं
तल्लघु भवतीत्यर्थः ॥ १८ ॥—

**तदेव शूलिकाप्रोतमङ्गारे परिपाचितम् ॥ १९ ॥**
**ज्ञेयं गुरुतरं किञ्चित् प्रदिग्धं गुरुपाकतः ॥**

तस्यैव उल्लुप्तस्याङ्गारपाचनादिविशेषेण गुणमाह—तदित्यादि । शूलिकाप्रोतमिति लो-
हादिशलाकारोपितम् । गुरुतरमिति परिशुष्काद्गुरोर्गुरुतरं ज्ञेयम् । कुत इत्याह—प्रदिग्ध
गुरुपाकत इति यस्मात् स्नेहादिप्रदिग्धं वस्तु पाकतो गुरु भवति; अथवा गुरुपाकत
इति परिशुष्कविशेषणं, तेन गुरुपाकतः परिशुष्कात् शूलपाचितं गुरु ज्ञेयम् । अत्रैव
हेतुगर्भविशेषणं प्रदिग्धमिति स्नेहादिप्रदिग्धत्वादित्यर्थः ॥ १९ ॥—

**मांसं यत्तैलसिद्धं तद्वीर्योष्णं पित्तकृद्गुरु ॥ २० ॥**
**घृतसिद्धं तु रुच्यग्निदृष्टिदं पित्तनुल्लघु ॥**

एषां सर्वेषामेव तैलयोगकृतं घृतयोगकृतं च गुणविशेषमाह—मांसमित्यादि ॥२०॥—

**वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥ २१ ॥**

वेशवारगुणमाह—वेशवार इत्यादि । वेशवारलक्षणं यथा,—"निरस्थि पिशितं पिष्टं
स्विन्नं गुडघृतान्वितम् । कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः"—इति ॥ २१ ॥

**रसो ज्वरक्षयहरः स्मृत्योजःस्वरवर्धनः ॥**
**बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणिनां हितः ॥ २२ ॥**

मूर्तमांसप्रकारमभिधाय द्रवमांसप्रकारमाह—रस इत्यादि ॥ २२ ॥

**स दाडिमयुतो वृष्यः संस्कृतो दोषनाशनः ॥**

तस्यैव मांसरसस्य द्रव्यसंयोगजं गुणमाह—स इत्यादि। स इति मांसरसः। संस्कृत इति कट्वकादिना ॥—

**प्रीणनः सर्वधातूनां विशेषान्मुखशोषिणाम् ॥ २३ ॥**
**क्षुत्तृष्णापहरः श्रेष्ठः सोरावः स्वादुशीतलः ॥**

सोरावगुणमाह—प्रीणन इत्यादि। सोरावो रसस्योपर्यच्छो भागः ॥ २३ ॥—

**मांसं यदुद्धृतरसं न तत्पुष्टिबलावहम् ॥ २४ ॥**
**विष्टम्भि दुर्जरं रूक्षं नीरसं मारुतावहम् ॥**

मांसक्काथसारो रसः तेन तत्प्रसङ्गेन तत्किट्टभूतमांसगुणमाह—मांसमित्यादि॥२४॥—

**दग्धमत्स्यो गुरुर्वृष्यो बृंहणः प्राणवर्धनः ॥ २५ ॥**
**क्षीणशुक्राश्च ये केचित् भग्नजर्जरिताश्च ये ॥**
**नित्यं स्त्रीसेविनश्चैव क्षीणरेतस एव च ॥ २६ ॥**
**दग्धमत्स्यो हितस्तेषां सतैललवणान्वितः ॥**
**तस्माद्धीनगुणः किंचिद्भ्रष्टमत्स्य उदाहृतः ॥ २७ ॥**

आमिषत्वसामान्याद् दग्धमत्स्यगुणमाह—दग्धमत्स्य इत्यादि ॥ २५—२७ ॥

**यथाप्रकृतिनिर्देश्यो व्यञ्जनेषु गुणान्वयः ॥**

अनुक्तव्यञ्जनगुणज्ञानार्थमाह—यथेत्यादि ॥—

**कफघ्नो दीपनो हृद्यः शुद्धानां व्रणिनामपि ॥ २८ ॥**
**ज्ञेयः पथ्यतमश्चापि मुद्गयूषः कृताकृतः ॥**

यूषेषु प्रधानत्वात् मुद्गयूषगुणमाह—कफघ्न इत्यादि। कृताकृत इति लवणादिसंयुतः कृत इत्युच्यते, तद्रहितस्तु अकृत इति। उक्तं हि सुश्रुते—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्"—इति ॥ २८ ॥

**स तु दाडिममृद्वीकायुक्तः स्याद्रागषाडवः ॥ २९ ॥**
**रुचिष्णुर्लघुपाकश्च दोषाणां च विरोधकृत् ॥**

अस्यैव यूषस्य संयोगविशेषेण नामान्तरमाह—स इत्यादि ॥ २९ ॥—

**मसूरमुद्गगोधूमकुलत्थलवणैः कृतः ॥ ३० ॥**
**कफपित्ताविरोधी स्याद्वातव्याधौ च शस्यते ॥**

मसूरादिपञ्चकयूषगुणमाह—मसूरेत्यादि ॥ ३० ॥—

**मृद्वीकादाडिमैर्युक्तः स चाप्युक्तोऽनिलार्दिते ॥ ३१ ॥**

**रोचनो दीपनो हृद्यो लघुपाक्युपदिश्यते ॥**

अस्यैव मृद्वीकादियोगेन गुणमाह—मृद्वीकेत्यादि ॥ ३१ ॥—

**पटोलनिम्बयूषौ तु कफमेदोविशोषिणौ ॥ ३२ ॥**
**पित्तघ्नौ दीपनौ हृद्यौ क्रिमिकुष्ठज्वरापहौ ॥**

अत्र यूषस्य सूपयोनित्वाद् मुद्गादिकं त्रिगुणमिच्छन्ति । द्विवचनोपादानात् यूषद्वयं ज्ञेयम् ॥ ३२ ॥—

**हन्ति मूलकयूषस्तु कफमेदोगलामयान् ॥ ३३ ॥**
**श्वासकासप्रतिश्यायप्रसेकारोचकज्वरान् ॥**
**मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ॥ ३४ ॥**
**यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥**

मूलकयूष इति मूलकशुण्ठकयूषः, चन्द्रिकाकारस्तु बालमूलयूष इत्याह, जेज्झडस्तु यद्यपि बालमूलकं त्रिदोषघ्नं तथापि तस्य यूषकरणे श्रुतिर्नास्तीति अयमपि मुद्गादिसहितो ज्ञेय इत्याह ॥ ३३ ॥ ३४ ॥—

**सर्वधान्यकृतस्तद्वद्बृंहणः प्राणवर्धनः ॥ ३५ ॥**

सर्वधान्यकृत इति सर्वशमीधान्यकृतः; शुकधान्यकुधान्ययोस्तु अयूषयोनित्वादिह न ग्रहणम् ॥ ३५ ॥

**खडकाम्बलिकौ हृद्यौ छर्दिवातकफे हितौ ॥**

खडकाम्बलिकयूषविशेषयोर्गुणमाह—खडेत्यादि । अत्र खडो द्विविधः सतक्रशमीधान्य एकः, सतक्रशाकश्चापरः; तत्राद्यः "ससूप्यधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् खडान्—" इत्युक्तलक्षणः । सतक्रशाकस्तु—"तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः । सुपक्वं खडयूषोऽयमयं काम्बलिकोऽपरः ॥ दध्यम्ललवणस्नेहतिलमाषसमन्वितः"—इति ॥—

**बल्यः कफानिलौ हन्ति दाडिमाम्लोऽग्निदीपनः ॥ ३६ ॥**
**धान्याम्लो दीपनो हृद्यः पित्तकृद्वातनाशनः ॥**
**दध्यम्लः श्लेष्मलो बल्यः स्निग्धो वातहरो गुरुः ॥ ३७ ॥**
**तक्राम्लः पित्तकृद्बल्यो विषरक्तप्रदूषणः ॥**

तत्राम्लसिद्धः काम्बलिक इति अम्लानां बहुत्वात् येन येनाम्लेन यूषो यं यं गुणं करोति तं तं दर्शयन्नाह—बल्य इत्यादि । दाडिमेनाम्लीक्रियते यो यूषः स दाडिमाम्लः । एवं दध्यम्लधान्याम्लादिकं च व्याख्येयम् ॥ ३६ ॥ ३७ ॥—

**अथ गोरसधान्याम्लफलाम्लैरन्वितं च यत् ॥ ३८ ॥**
**यथोत्तरं लघु हितं संस्कृतासंस्कृतं रसम् ॥**

उक्तयोर्यूषरसयोरम्लान्तरसंयोगेन तथा संस्कृतासंस्कृतयोरपि गुरुलाघवं दर्शयन्नाह—अथेत्यादि । अत्र रसमिति नपुंसकनिर्देशात् सामान्येन यूषरसयोरुभयोरपि ग्रहणम् । यथोत्तरं लघ्विति तेन गोरसाम्लापेक्षया धान्याम्लान्वितो रसो यूषो वा लघुर्भवतीत्यादि ज्ञेयं; तथा संस्कृतापेक्षया असंस्कृतो लघुरित्यर्थः । संस्कृतासंस्कृतं कृताकृतमित्यर्थः ॥३८॥—

**तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥ ३९ ॥**
**सिण्डाकी च गुरूणि स्युः कफपित्तहराणि च ॥**

कृतान्नप्रसङ्गे शुष्कशाकविशेषाणां कृतान्नानां गुणमाह—तिलेत्यादि । पिष्टतिलपिण्याकविकृतिकृतव्यञ्जनानि तिलपिण्याकविकृतिशब्देनोच्यन्ते । तथा शुष्कशाकं विरूढकमपि व्यञ्जनविशेषो देशान्तरप्रसिद्धः । सिण्डाकी च तीरभूमौ प्रसिद्धा ॥ ३९ ॥—

**रागषाडवयोगास्तु छर्दिमूर्च्छातृषापहाः ॥ ४० ॥**
**लघवो बृंहणा वृष्या हृद्या रोचनदीपनाः ॥**

रागषाडवगुणमाह—रागेत्यादि । तत्र रागः "सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बुफलरसैर्युक्तो रागो राजिकया कृतः"—इति । षाडवाः पुनर्मधुराम्ललवणसुगन्धिद्रव्यजा नानाविधाः । अन्ये पुनरेवं वदन्ति, यदाह नलः,—"क्वथितं तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः"—इति ॥ ४० ॥—

**रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ४१ ॥**

रसालागुणमाह—रसालेत्यादि । रसाला दधिसंयोगविशेषाः । तथा हि,—"सचातुर्जातकाजाजि सगुडार्द्रकनागरम् । रसाला स्याच्छिखरिणी सुघृष्टं सरसं दधि"—इति॥४१॥

**दधि स्याद्गुडसंयुक्तं स्नेहनं चानिलापहम् ॥**

रसालाप्रसङ्गेन सगुड़दधिगुणमाह—दधीत्यादि ॥—

**द्राक्षाखर्जूरकोलानां गुरु विष्टम्भि पानकम् ॥ ४२ ॥**
**परूषकाणां क्षौद्रस्य यच्चेक्षुविकृतिं प्रति ॥**

पानकानामपि कृतान्नभेदत्वात् तद्गुणमाह—द्राक्षेत्यादि । यच्चेक्षुविकृतिं प्रतीत्यत्र पानकमिति संवन्धः ॥ ४२ ॥—

**तेषां कट्वम्लसंयोगान् पानकानां पृथक् पृथक् ॥ ४३ ॥**
**द्रव्यं मानं च विज्ञाय गुणकर्माणि निर्दिशेत् ॥**

उक्तानुक्तपानकगुणज्ञानोपायमाह—तेषामित्यादि । न हि नियतं द्रव्यं पानकेषु संयुज्यते, किं तर्हि पुरुषाणामभिलाषात् तथा व्याध्यादिविशेषैश्च तानि तानि द्रव्याणि

संयुज्यन्ते, अतस्तत्तत् कट्वम्लादिद्रव्यसंयोगं बुद्ध्वा तेषां संयुक्तानां द्रव्याणां च मध्ये कस्य कियन्मानमिति बुद्ध्वा उक्तानुक्तपानकानां गुणकर्माणि निर्दिशेदित्यर्थः ॥ ४३॥—

**दुग्धाम्लं शीतलं स्वादु वृष्यं वर्णकरं गुरु ॥ ४४ ॥**
**वातपित्तहरं रुच्यं बृंहणं बलवर्धनम् ॥**

पानकस्य पेयत्वात् तत्प्रसङ्गेनान्यदपि पेयमाह—दुग्धाम्लमित्यादि ॥ ४४ ॥—

**शक्तवः सर्पिषाभ्यक्ताः शीतोदकपरिप्लुताः ॥ ४५ ॥**
**नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥**

मन्थानामपि कृतान्नविशेषत्वात् तद्गुणे वाच्ये प्रथमं तल्लक्षणमाह—शक्तव इत्यादि । शक्तव इति यवशक्तवो लाजशक्तवश्च । डल्हणोऽपि अविशेषोक्त्या यवादिशक्तवो ग्राह्या इत्याह ॥ ४५ ॥—

**मन्थः सद्यो बलकरः पिपासाज्वरनाशनः ॥ ४६ ॥**

मन्थगुणमाह—मन्थ इत्यादि । सद्यो बलकर इत्यापातबलकरः, न तूत्तरकालं; रौक्ष्यलाघवात् ॥ ४६ ॥

**साम्लस्नेहगुडो मूत्रकृच्छ्रोदावर्तनाशनः ॥**
**शर्करेक्षुरसद्राक्षायुक्तः पित्तविकारनुत् ॥ ४७ ॥**
**द्राक्षामधुकसंयुक्तः कफरोगनिवर्हणः ॥**
**वर्गत्रयेणोपहितो मलदोषानुलोमनः ॥ ४८ ॥**

तस्यैव द्रव्यान्तरसंयुक्तस्य गुणमाह—साम्लेत्यादि । मूत्रकृच्छ्रोदावर्तौ हि पक्वाशयगताः, पक्वाशयश्च वायोः स्थानं; तेन मूत्रकृच्छ्रादिहन्तृत्वेन अस्य वातहरत्वमप्युक्तम् । वर्गत्रयेणेति अनन्तरोक्ताम्लादिशर्करादिद्राक्षादिवर्गत्रयेणेत्यर्थः ॥ ४७ ॥ ४८ ॥

**गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्ययात् ॥**
**शक्तूनामाशु जीर्येत मृदुत्वादवलेहिका ॥ ४९ ॥**

शक्तुकृतमन्थप्रसङ्गेन शक्तुपिण्डीशक्त्ववलेहिकयोर्गुणमाह—गुर्वीति । खरा इति कठिना ॥ ४९ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे कृतान्नवर्गो नाम एकादशो वर्गः समाप्तः ।**

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां कृतान्नवर्गो नाम एकादशो वर्गः समाप्तः ।

---

**वक्ष्याम्यतः परं भक्ष्यान् रसवीर्यविपाकतः ॥**
**पृथुका गुरवः स्निग्धाः कफविष्टम्भकारकाः ॥ १ ॥**
**बल्याः सक्षीरभावात्तु वातघ्ना भिन्नवर्चसः ॥**
**लाजाश्छर्द्यतिसारघ्नाः स्नेहमेदःकफच्छिदः ॥ २ ॥**

भक्ष्याणामपि पृथुकादीनां शूकशमीधान्यसंभवत्वात् कृतान्नवर्गानन्तरं भक्ष्यवर्ग उच्यते । पृथुका इति चिपिटाः । सक्षीरभावादिति सक्षीरधान्यकृतत्वात् ॥ १ ॥ २ ॥

**धानोल्वम्बास्तु लघवः कफमेदोविशोषणाः ॥**

धानादीनां गुणमाह—धानेत्यादि । धाना भृष्टयवाः; उल्वम्बा होल्लाकाः, अत्र मुद्गकलायादिशिम्बा अग्निपक्वा होल्लाका इति डल्हणः ॥—

**शक्तवो वातला रूक्षा बद्धवर्चस एव च ॥ ३ ॥**

धानाप्रसङ्गेन यवशक्तुगुणमाह—शक्तव इत्यादि । शक्तूनां रूक्षत्वेऽपि वातलत्वाभिधानं तक्रस्य रूक्षस्यापि वातहारित्वदर्शनात् ॥ ३ ॥

**भक्ष्याः क्षीरकृता बल्या वृष्या हृद्याः सुगन्धिनः ॥**
**अदाहिनः पुष्टिकरा दीपनाः पित्तनाशनाः ॥ ४ ॥**

भक्ष्याणां योनिविशेषेण गुणविशेषं दर्शयन्नाह—भक्ष्या इत्यादि । गोधूमपिष्टविकृतीः क्षीरेणालोड्य ये क्रियन्ते ते क्षीरभक्ष्याः । दीपनत्वं पुनरेषां स्ववर्गापेक्षया वातोपहताग्नेः संस्कारप्रभावाद्वा ॥ ४ ॥

**घृतपूराः प्राणकरा हृद्याः श्लेष्मविवर्धनाः ॥**
**वातपित्तहरा वृष्या गुरवो मांसशुक्रलाः ॥ ५ ॥**

घृतपूरस्य गुणमाह—घृतपूरा इत्यादि । घृतपूरस्य लक्षणं यथा,—'मर्दिता समिता क्षीरनारिकेलसितादिभिः । अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते''—इति । समिता गोधूमचूर्णम् ॥ ५ ॥

**गौडिका बृंहणा वृष्या गुरवश्चानिलापहाः ॥**
**अदाहिनः पित्तसहाः शुक्रलाः कफवर्धनाः ॥ ६ ॥**

गौडिका इति । गोधूमपिष्टवेष्टना गुडप्रधानोदरा गौडिका उच्यन्ते । अदाहिन इति ईषद्विदाहिनः । पित्तसहा इति पित्तं न कोपयन्तीत्यर्थः ॥ ६ ॥

**मधुशीर्षकसंयावाः पूपा ये ते विशेषतः ॥**
**गुरवो बृंहणाश्चैव**

मधुशीर्षकादीनां गुणमाह—मध्वित्यादि । मधुशीर्षकाः समितावेष्टनाः पाकाद्धनी-

भृतमधुना कृतोदरा मधुशीर्षका उच्यन्ते । संयावाः पुनः,—"समितामम्बुदुग्धेन मर्दयित्वा सुशोभनाम् । पचेद्घृतोत्तरे खण्डे क्षिपेद्भाण्डे नवे च तत् ॥ संयावोऽसौ युतश्चूर्णैस्त्वगेलामरिचार्द्रकैः"—इति ।—

**मोदकास्तु सुदुर्जराः ॥ ७ ॥**

मोदकगुणानाह—मोदका इत्यादि । मोदकाः प्रसिद्धाः ॥ ७ ॥

**षट्टकः प्राणरुचिकृद्गुरुः स्वर्योऽनिलापहः ॥**

षट्टकगुणमाह—षट्टक इत्यादि । षट्टकानां बहुत्वेऽप्युदाहरणार्थमेको लिख्यते—"लवङ्गव्योषखण्डैस्तु दधि निर्मथ्य गालितम् । दाडिमीबीजसंयुक्तं चन्द्रचूर्णावचूर्णितम् ॥ षट्टकस्तु प्रमोदाख्यो नलादिभिरुदाहृतः"—इति ॥—

**विष्यन्दः स्निग्धमधुरो बल्यो वातापहो गुरुः ॥ ८ ॥**

विष्यन्दगुणानाह—विष्यन्द इत्यादि । विष्यन्दस्तु,—"आमगोधूमचूर्णं तु सर्पिःक्षीरसितान्वितम् । नातिसान्द्रो नातितनुर्विष्यन्दो नाम पाकतः"—इति । अन्ये तु घृतभृष्टतण्डुलान् विष्यन्दशब्देनाहुः ॥ ८ ॥

**बृंहणा वातपित्तघ्ना बल्या भक्ष्यास्तु सामिताः ॥**

समिताकृतभक्ष्याणां सामान्यगुणमाह—बृंहणा इत्यादि । समिता गोधूमचूर्णं, तत्कृताः सामिताः ॥—

**हृद्याः पथ्यतमास्तेषां लघवः फेनकादयः ॥ ९ ॥**

इदानीं समिताकृतभक्ष्यविशेषगुणमाह—हृद्या इत्यादि । अत्रापि समिता इत्यनुवर्तते । फेनकलक्षणं यथा,—"विमर्द्य विमलां शुक्लां समितां नातिशर्कराम् । संवेष्टनाय गर्भार्थं खरपाकं घृते पचेत् । फेनकं फेनसङ्काशं संपूर्णशशिसन्निभम्"—इति । अत्र गर्भार्थमपि समितैव घृते पक्तव्या ॥ ९ ॥

**मुद्गादिवेशवाराणां पूर्णा विष्टम्भिनो मताः ॥**

समिताकृतभक्ष्याणामेव मुद्गादिकृतगर्भाणां गुणमाह—मुद्गेत्यादि । अत्र वेशवारशब्देन मुद्गादीनां स्विन्नपिष्टः कल्क उच्यते । वेशवाराणामिति करणे षष्ठी । पूर्णा इति कृतगर्भाः ॥—

**वेशवारैः सपिशितैः संपूर्णा गुरुबृंहणाः ॥ १० ॥**

पिशितवेशवारकृतगर्भाणां गुणमाह—वेशवारैरित्यादि । सपिशितैरिति पूर्वोक्तमुद्गादिवेशवारनिरासार्थं विशेषणम्, तेन पिशितवेशवारैरित्यर्थः । अन्ये तु वेशवारं शुण्ठ्यादिकमाहुः । एते सामिताः ॥ १० ॥

**पाललाः श्लेष्मजननाः शष्कुल्यः कफपित्तलाः ॥**

**शालिपिष्टमया भक्ष्याः कफपित्तप्रकोपणाः ॥ ११ ॥**

**विदाहिनो नातिबला गुरवश्च विशेषतः ॥**

पाललादिगुणानाह—पालला इत्यादि । पललं तिलकल्कस्तत्कृताः पाललाः । शष्कुली तु तिलमुद्गादिचूर्णकृता तैलपक्वा शष्कुलीति लोके ॥ ११ ॥—

**वैदला गुरवो भक्ष्याः कषायाः सृष्टमारुताः ॥ १२ ॥**
**विष्टम्भिनः पित्तहराः श्लेष्मघ्ना भिन्नवर्चसः ॥**

मुद्गमाषादिविदलकृतानां भक्ष्याणां गुणमाह—वैदला इत्यादि ॥ १२ ॥—

**विरूढककृता भक्ष्या गुरवोऽनिलपित्तलाः ॥ १३ ॥**

विरूढकृतभक्ष्यगुणानाह—विरूढकेत्यादि । विरूढककृता इति अङ्कुरितमुद्गादिकृताः ॥ १३ ॥

**हृद्याः सुगन्धिनो भक्ष्या लघवो घृतपाचिताः ॥**
**वातपित्तहरा बल्या वर्णदृष्टिप्रसादनाः ॥ १४ ॥**
**विदाहिनस्तैलकृता गुरवः कटुपाकिनः ॥**
**उष्णा मारुतदृष्टिघ्नाः पित्तलास्त्वक्प्रदूषणाः ॥ १५ ॥**

उक्तानुक्तकृतभक्ष्याणां घृते तैले च पाकाद्गुणविशेषमाह—हृद्या इत्यादि॥१४॥१५॥

**कपालाङ्गारपक्वास्तु लघवो वातकोपनाः ॥**

कपालाङ्गारसिद्धानां स्नेहसिद्धेभ्यो लघुत्वं दर्शयन्नाह—कपालेत्यादि ॥—

**कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥ १६ ॥**

कुल्माषस्य गुणमाह—कुल्माषा इत्यादि । यवपिष्टमुष्णोदकमृदितमपूपीकृतं कुल्माषमाहुः ॥ १६ ॥

**उदावर्तहरो वाट्यः कासपीनसमेहनुत् ॥**

वाट्यगुणानाह—उदावर्तेत्यादि । वाट्यो भृष्टयवैः कृतो भक्ष्यः । अन्ये तु दलितयवगोधूमादिकृतं वाट्यमाहुः ॥—

**तुषाम्बुवटकं प्रोक्तं वृष्यं रुच्याग्निदीपनम् ॥ १७ ॥**
**वृष्यं सन्दीपनं चैव वटकं तक्रसंस्कृतम् ॥**

काञ्जिकवटकतक्रवटकयोर्गुणमाह—तुषाम्ब्वित्यादि । तुषाम्बुभावितं तक्रभावितं च वटकमित्यर्थः ॥ १७ ॥—

**यद्द्रव्यं यद्गुणं प्रोक्तं तद्भक्ष्यास्तद्गुणा मताः ॥ १८ ॥**
**खडाः खडयवाग्वश्च रागषाडवषट्टकाः ॥**
**पानकानि विचित्राणि यूषाश्चानेकयोनयः ॥ १९ ॥**

**कट्वम्ललवणाः स्वादुलेहा ये च फलोद्भवाः ॥**
**एवमादीनि चान्यानि क्रियन्ते वैद्यवाक्यतः ॥ २० ॥**
**यथाकारणमासाद्य भोक्तृणां छन्दतोऽपि वा ॥**
**अनेकद्रव्ययोनित्वाच्छास्त्रतस्तान् विनिर्दिशेत् ॥ २१ ॥**

अनुक्तभक्ष्यगुणज्ञानार्थमाह—यदित्यादि । इदानीं पूर्वोक्तानां व्यवस्थितसंयोगत्वेनोक्तानां गुणानां कारणतो व्यवस्थितसंयोगतया गुणान्तरमूह्यमाह—खडा इत्यादि । खडा इति कृतान्नवर्गोदिताः, तैः कृता यवाग्वः खडयवाग्वः । अनेकयोनय इति विशेषणं खडादिषु प्रत्येकमभिसंबध्यते । अतएवानवस्थितगुणाः खडादय इत्यर्थः । स्वादुलेहा ये च फलोद्भवा इति आम्रलेहादयः । कारणमासाद्येति पुरुषव्याधिदोषभेदादिहेतुं प्राप्य, छन्दत इति पुरुषेच्छाविशेषात्, शास्त्रत इति तर्कसहितशास्त्रात्, खडादिषु युज्यमानं द्रव्यगुणं ज्ञात्वा तर्कतश्च तत्संस्कारादिगुणमुन्नीय खडादिगुणमादिशेदित्यर्थः ॥ १८–२१ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे भक्ष्यवर्गो द्वादशो वर्गः समाप्तः ।**

श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां भक्ष्यवर्गो नाम द्वादशो वर्गः ॥

---

**अथाहारविधिं वक्ष्ये विस्तरेणानुपूर्वशः ॥**

'विधिना कृत आहारः प्रीणनो धातुपोषकः' इति पूर्वोक्तं, अत्र कोऽसौ विधिः कथं वा आहारेण धातूनां पोषणमित्येतदर्थं प्रकरणमारभते—अथेत्यादि ॥—

**आप्तास्थितमसंकीर्णं शुचि कार्यं महानसम् ॥ १ ॥**

आहारसिद्धेर्महानससाध्यत्वात् प्रथमं तद्विधिमाह—आप्तेत्यादि । आप्तैः साधुलोकैरास्थितमाश्रितम् । असंकीर्णमसंबाधम् ॥ १ ॥

**तत्राप्तैः साधितं रम्यमविरुद्धमुपस्कृतम् ॥**
**विषघ्नैरगदैर्मन्त्रैर्भिषगन्नं निवेदयेत् ॥ २ ॥**

तत्र महानसे कीदृशमन्नमुपकल्प्यमित्याह—तत्रेत्यादि । आप्तैरिति सूपकारविशेषणम् । रम्यं मनोहरम् । अविरुद्धमिति संयोगादिभिरविरुद्धम् । निवेदयेत् उपढौकयेत् ॥ २ ॥

**घृतं कार्ष्णायसे देयं पेया देया तु राजते ॥**
**फलानि सर्वभक्ष्यांश्च प्रदद्याद्वै दलेषु तु ॥ ३ ॥**

परिशुष्कप्रदिग्धानि सौवर्णेषूपकल्पयेत् ॥
प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् ॥ ४ ॥
कट्वराणि खडांश्चैव सर्वान् शैलेषु दापयेत् ॥
दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः ॥ ५ ॥
पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् ॥
वज्रवैदूर्यपात्रेषु रागषाडवषट्टकान् ॥ ६ ॥

किंचिद्द्रव्यमाधारप्रभावेण कार्मुकं भवतीत्यत आह—वै दलेष्वित्यादि। वैशब्दः पादपूरणे, अन्ये तु वैदलं वंशादिविदलकृतं पात्रमाहुः। परिशुष्कप्रदिग्धयोरुक्तमेव लक्षणम्। प्रद्रवाणि मण्डानि। कट्वरं तक्रम्। अन्ये तु "सौवीराम्लमथात्यम्लकाञ्जिकं कट्वरं विदुः। सस्नेहदधिजं तक्रमाहुरन्ये तु कट्वरम्"—इति। शैलेष्विति पाषाणपात्रेषु। वज्रं हीरकं तस्य पात्रं न संभवतीति वज्रयुक्तं पात्रं वज्रपात्रं ज्ञेयम्। अन्ये तु 'दद्याद् वैदूर्यपात्रेषु' इति पठन्ति ॥ ३–६ ॥

पुरस्ताद्विमले पात्रे सूपं दद्यात्तु पाचकः ॥
फलानि सर्वभक्ष्यांश्च परिशुष्काणि यानि च ॥ ७ ॥
तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् ॥
प्रद्रवान् रसयूषादीन् सव्ये पार्श्वे प्रदापयेत् ॥ ८ ॥
सर्वान् गुडविकारांश्च रागषाडवषट्टकान् ॥
पुरस्तात् स्थापयेत् प्राज्ञो द्वयोरपि च मध्यतः ॥ ९ ॥
एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् ॥
भोक्तारं विजने रम्ये निःसंपाते तु भोजयेत् ॥ १० ॥

आधारविशेषमभिधाय देशविशेषेण आहारविधिमाह—पुरस्तादित्यादि। पुरस्तादग्रत इत्यर्थः। न केवलं पुरस्तात् द्वयोरपि च मध्यत इति द्वयोर्मध्ये एकस्मिन् पार्श्वे दद्यात्। एतेन सर्वत्र दातव्यमिति डल्हणो व्याचष्टे। निःसंपाते निर्वाते ॥ ७–१० ॥

पूर्वं मधुरमश्नीयात् मध्येऽम्ललवणौ रसौ ॥
अन्ते शेषान् रसान् वैद्यो भोजनेष्ववचारयेत् ॥ ११ ॥

इदानीं भोजनस्यानुपूर्वीमाह—पूर्वमित्यादि। पूर्वं मधुरमिति वातजयार्थम्। मध्येऽम्ललवणाविति मध्यस्थिताग्न्युत्तेजनार्थम्। शेषानिति कटुतिक्तकषायान्। तेन पश्चादूर्ध्वस्थश्लेष्मजयार्थं देयाः ॥ ११ ॥

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ १२ ॥

इदानीं द्रवाद्रवरूपस्याहारस्य मात्रामाह—अन्नेनेत्यादि ॥ १२ ॥

भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् ॥
शब्दान् रूपरसान् गन्धान् स्पर्शांश्च मनसः प्रियान् १३
भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति ॥
भुक्त्वोपविशतस्तुन्दं शयानस्य वपुर्भवेत् ॥ १४ ॥
आयुश्चङ्क्रममाणस्य मृत्युर्धावति धावतः ॥
ताम्बूलमुपसेवेत कर्पूराद्यधिवासितम् ॥ १५ ॥
ताम्बूलं क्षतपित्तास्त्ररूक्षोत्कुपितचक्षुषाम् ॥
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥ १६ ॥

भोजनान्तरीयं विधिमाह—भुक्त्वेत्यादि ॥ १३–१६ ॥

अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति ॥
तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम् ॥ १७ ॥
समानेनावधूतोऽग्निरुदीर्यः पवनेन तु ॥
काले भुक्तं समं सम्यक् पचत्यायुर्विवृद्धये ॥ १८ ॥
एवं रसमलायान्नमाशयस्थमधःस्थितः ॥
पचत्यग्निर्यथा स्थाल्यामोदनायाम्बुतण्डुलम् ॥ १९ ॥

इदानीमाहारस्याग्निना पाको यथा भवति यथा च पच्यमानमन्नं देहधात्वादिरूपतामापद्यते तदाह—अन्नमित्यादि । आदानमाहारनयनं कर्म यस्य स तथा । प्रकर्षतीति नयति । द्रवैरिति पानीयादिभिः । भिन्नसंघातं अवयवशैथिल्यमापन्नम् । अवधूत इत्युद्दीपितः । समानेन इत्यनन्तरमविकृतेनेति शेषः, वितकृस्य वायोरग्निवैषम्यकरत्वात् । काले इति बुभुक्षाकाले । सममिति मात्राप्रकृत्यादिभिरुचितम् । सम्यगिति निर्विकारम् । अधःस्थित इत्यनेन बहिरग्नेर्यथा ऊर्ध्वज्वलनस्वभावस्तथा ऊर्ध्वस्थपाकसामर्थ्यं तथान्तराग्नेरपीति तत्साधर्म्यं दर्शयति । रसमलायेति रसार्थं मलार्थं च पचतीत्यर्थः । आशयस्थमित्यामाशयस्थम् । अमुमेवार्थं दृष्टान्तेनोपपादयति—यथेत्यादि ॥ १७–१९ ॥

अन्नमिष्टं ह्युपहितमिष्टैर्गन्धादिभिः पृथक् ॥
देहे प्रीणाति गन्धादीन् घ्राणादीनीन्द्रियाणि च ॥२०॥

अन्नस्य पाकसंपाद्यं कार्यान्तरमप्याह–अन्नमित्यादि । अन्नं कर्तृ देहस्थितान् गन्धादीन् प्रीणाति आप्याययति। ननु, अन्नेन द्रव्येण द्रव्यपोषणमेव युक्तं न तु गुणपोषणमित्यतोऽन्नं विशिनष्टि—गन्धादिभिरुपहितमिति गन्धरूपरसस्पर्शशब्दैर्युक्तमित्यर्थः । एतेन विशेषणद्वारा अन्नगतैर्गन्धादिभिर्देहगतगन्धादिपोषणमिति सिद्धम् । तथा गुणवृद्धिस्तु गुणिवृद्धिं विना न भवतीति पाञ्चभौतिकेन आहारेण देहगतपञ्चभूतपोषणमप्यत एव सिध्यति । इष्टमिति विशेषणेन चान्नस्यानिष्टस्यानिष्टगन्धादिभिर्युक्तस्य न देहव्यवस्थितगन्धादितर्पकत्वमिति दर्शयति । न केवलं गन्धादीनेव प्रीणाति किंतु घ्राणादीनीन्द्रियाणि च प्रीणाति । आदिशब्दाद्रसनादीनां चतुर्णां ग्रहणम् । पृथगित्यनेन आहारगतो यः पार्थिवो भागः स घ्राणं, तद्गतगन्धश्च देहगन्धं प्रीणाति; एवं आहारगतो जलीयभागो रसनां पुष्णाति, तद्गतो रसः देहरसं पुष्णातीत्यादि व्याख्येयम् ॥ २० ॥

**भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ॥**
**पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्ति हि॥२१॥**

भौतिकाग्निव्यापारमाह—भौमेत्यादि । पार्थिवादिद्रव्येषु हि पाकेन विशिष्टगन्धवर्णादयो जायन्ते; पाकस्तूष्माणं विना न भवतीति पाकान्यथानुपपत्त्या पार्थिवादिद्रव्यव्यवस्थिताः पञ्चोष्माणः स्वीक्रियन्ते । ते तु सौक्ष्म्यात् तत्तद्द्रव्येषु साक्षान्नोपलभ्यन्ते, अतस्त एव जाठराग्निसन्धुक्षितबलाः सन्तः स्वान् स्वान् पार्थिवादीन् पञ्चाहारगुणान् पचन्ति, पूर्वस्थितपार्थिवादिगन्धविलक्षणान् पाकेन निर्वर्तयन्तीत्यर्थः । एतदेव चरके विविधाशितपीतीये उक्तम्—"विविधमशितपीतलीढखादितं जन्तोर्हितमन्तरग्निसन्धुक्षितबलेन यथास्वेनोष्मणा सम्यग्विपच्यमानम्—" इति । (च. सू. स्था. अ. २८)। आहारस्य गुणाः आहारगुणाः; किंवा आहाराश्च गुणाश्च आहारगुणाः । यद्यपि भूताग्निना द्रव्याण्येव पच्यन्ते नतु गुणाः, उक्तं हि,—"जाठरेणाग्निना पूर्वं कृते संघातभेदने । पश्चाद् भूताग्नयः पञ्च स्वं स्वं द्रव्यं पचन्ति हि—" इति । तथापि द्रव्यपाकवशाद् विशिष्टगन्धादिगुणा जायन्ते इत्यभिप्रायेण गुणानामपि पाक उक्तः । ननु, तेजः स्वयमेव पाचकं तस्य पाचकेनाग्न्यन्तरेण किं क्रियते । ब्रूमः, न वयं तेजसि पाचकमग्निं स्वीकुर्मः किंतु तैजसस्य सुवर्णादिद्रव्यतुल्यस्य पित्तादेः पाकजन्यत्वेन पाचकाग्न्यपेक्षा युक्तैव; एवं वायवीयनाभसद्रव्ययोरप्याश्रित ऊष्मा वाय्वग्निनाभसाग्निवाच्यो ज्ञेयः ॥ २१ ॥

**सप्तभिर्देहधातारो धातवो द्विविधं पुनः ॥**
**यथास्वमग्निभिः पाकं यान्ति किट्टप्रसादवत् ॥ २२ ॥**

भौतिकाग्निव्यापारमभिधायविशिष्टधात्वग्निव्यापारमाह—सप्तभिरित्यादि । पुनरिति जाठराग्निपाकानन्तरम् । द्विविधमिति द्विप्रकारम् । तदेव प्रकारद्वयमाह—किट्टप्रसादवदिति किट्टप्रसादरूपमित्यर्थः । वतिरयमर्हार्थे, किंवा किट्टप्रसादवदिति मतु-

बन्तं क्रियाविशेषणम् । ननु, धात्वग्निवदुपधातुमलादिगता अपि पृथगग्नयः किमिति न स्वीक्रियन्ते? अथ तत्र पञ्चभूतानि सन्तीति भूताग्निभिरेव तेषां पाक उत्पत्स्यत इति चेत्तर्हि कृतं धात्वग्निभिरपि, भूताग्निभिरेव धातुपाकस्याप्युपपत्तेः। नैवं, बाह्येषु फलादिषु भूताग्निजन्यो यः पाको दृश्यते स किट्टप्रसादरूपतया नानुभूयते, उपधातुमलादिगतोऽपि पाकस्तादृश एवेति वैलक्षण्याभावादुपधात्वादिषु पृथगग्निस्वीकारोऽकिंचित्करः; रसादिधातुपाकस्तु किट्टप्रसादरूपतया विलक्षण इति तत्र पृथगग्निस्वीकारो युक्त एवेति । धातुषु ये भूताग्नयस्ते धात्वग्नेरेव सहाया इति । यद्यपि शुक्रस्य प्रसादरूपतया किट्टवान् पाको नास्ति तथापि बहूनां किट्टवत्त्वाद् द्विविधनिर्देशो ज्ञेयः; यथा—छत्रिणो गच्छन्तीति ॥ २२ ॥

**रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥**
**अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रसादजः ॥ २३ ॥**

तत्र पाकजन्यैः प्रसादांशैर्येन क्रमेण ये ये जन्यन्ते तानाह—रसादित्यादि। प्रसादज इत्यस्य लिङ्गविपरिणामेन रक्तमित्यादिषु सर्वत्र संबन्धः । प्रसादजश्च सारभागः । तेन रसाद्रक्तं प्रसादजम्, ततो रक्तान्मांसं प्रसादजम्, मांसाच्च मेदः प्रसादजमित्यादि योज्यम् । रसाद्रक्तं प्रसादजमिति रसात् पाकेन जायते यः प्रसादांशस्तस्माद्रक्तं जायते; एवं रक्तात् पाकेन जायते यः प्रसादांशस्तस्माच्च मांसं जायत इत्यादि व्याख्येयम् । जनिश्चायं पोषण एव वर्तते नापूर्वोत्पादे; यतो रक्तादयो गर्भात् प्रभृत्येव उत्पन्ना रसादिभिः पोष्यन्ते । अन्ये तु गर्भप्रसादजमिति पठित्वा गर्भप्रसादजमिति समस्तपदेन ओज आचक्षते । अस्मिंस्तु पक्षे प्रसादजशब्दस्य न सर्वत्रान्वयः । ननु, "पुष्यन्ति त्वाहाररसात्—"इत्यादिना चरके रसेन रसपोषणमुक्तं, अत्र तु रसाद्रक्तमित्यादिना रसेन रक्तपोषणमुच्यते इति विरोधः । नैवम्, एक एवायमाहाररसो द्विप्रस्थानः पोष्यपोषकभेदेन; तत्रान्नपानादुत्पन्नो रसः पोषकः, रक्तादिवत् स्थायी यः स पोष्यः, तस्यैव हृदवस्थानमुक्तम् । अतएव पोष्यस्थायिरसव्यवच्छेदार्थमाहारेतिरसविशेषणमुक्तं चरकेण । यत्तु रसाद्रक्तमित्यादिवचनं तद्रसत्वेनाभेदविवक्षया रसं परित्यज्य रक्तमेव पठितं, न तु पोष्यस्य रसाख्यधातोरभावादिति । न चैवमष्टधातुकत्वं शरीरस्येति वाच्यम्, यतः स्थायिरसभागपोषकरसभागयोः स्थानभेदाग्निभेदाद्यभावादेकत्वमेवेति सप्तधातुकमेव शरीरमित्युच्यत इति । अत्र च रसाद्रक्ताद्युत्पादे केचिदिदं वदन्ति—यद्रसोऽग्निपच्यमानः सर्वात्मना रक्ततां याति रक्तं च मांसतामित्यादि पूर्वपूर्वधातुपरिणामेन उत्तरोत्तरधातूत्पादः, यथा—सर्वात्मना क्षीराद्दधि भवति दध्नो नवनीतं नवनीताद्घृतं घृताच्च घृतमण्ड इत्येकः पक्षः । किंवा रस एव रक्तं प्रथमं प्लावयति, तत्र रक्तस्थानसंबन्धात् रक्तसादृश्यं रक्तव्यपदेशं चानुभवति, रक्तं च रक्तसमानेन स्तोकेनांशेनाप्तं पोषयति, ततो रक्तमाप्लाव्य मांसमाप्लावयति तत्रापि मांससमाने-

नांशेन मांसपोषणं करोति मांससादृश्यं मांसशब्दाभिधेयतां चानुभवति, एवमुत्तरोत्तरधातून् रस एव प्लावयति, यथा—केदारनिषिक्तं कुल्याजलं प्रत्यासन्नां केदारीमाप्लावयतीति द्वितीयः पक्षः; एतदेवोक्तं हारीते यत्,—"रसः सप्ताहादर्वाक् परिवर्तमानः श्वेतकपोतहरितहारिद्रपद्मकिंशुकालक्तकरसप्रख्यश्चायं यथाक्रमं दिवसपरिवर्तोद्वर्णपरिवर्तमापद्यमानः पित्तोष्मोपरागाच्छोणितत्वमापद्यते—" इति, तथा सुश्रुतेऽपि,—"तत्रैषां धातूनाम्—" इत्यादिना तथा "स खलु त्रीणि त्रीणि—" (सु. सू. स्था. अ. १४) इत्यादिना रसेनैव रक्तादिधातुपोषणमनेन न्यायेनोक्तम्; किं वा आहाररस उत्पन्नो भिन्नैरेव मार्गैः स्थायिरसरुधिरमांसादीन् रसरुधिरादिसमानांशेन तर्पयति, तत्र यः प्रत्यासन्नो धातुस्तत्पोषको भागस्तच्छीघ्रं पुष्णाति, यस्तु विदूरधातुस्तस्य सूक्ष्मविदूरमार्गतया चिरेण पोषणं भवति, एवं भिन्नैरपि मार्गैर्धातुपोषणं भवति, तेन रक्तपोषणकालादुत्तरकालं मांसपोषको रसभागो मांसं पोषयति, तथा मांसपोषणकालादुत्तरकालं मेदःपोषको रसभागो मेदः पोषयतीत्यादि, तेन रसाद्रक्तमित्यादिवचनस्यायमर्थो यत्—रसपुष्टिकालादुत्तरकालं रक्तं प्रवर्तते रक्तपुष्टिकालादुत्तरकालं मांसं प्रवर्तत इत्यादि; अस्मिंस्तु पक्षे—"विण्मूत्रमाहारमलः सारः प्रागीरितो रसः। स तु व्यानेन निक्षिप्तः सर्वान् धातून् प्रतर्पयेत्"—इत्यादिवचनं मुख्यार्थमेव घटते; तेन यथा खले उपचितानां कपोतानां भिन्नदिग्गामिनां स्वीयस्वीयमार्गेणैव गच्छतां गम्यदेशस्य प्रत्यासन्नत्वविप्रकृष्टत्वादिभेदेन शीघ्रं चिरेण गमनं भवति तद्वत्; इति क्षीरदधिन्यायकेदारीकुल्यान्यायखलेकपोतन्यायात्त्रिधा धातुपोषणक्रमः। तत्र एतेषु पक्षेषु सर्वात्मपरिणामे त्रिचतुरोपवासेनैव देहस्य नीरसत्वं स्यात्, मासोपवासाच्च शुक्रमयं शरीरं स्यादित्युपेक्षणीय एव प्रथमः पक्षः। केदारीकुल्यान्यायपक्षे तु रसाद्रक्तादिपोषणं मुख्यार्थतया भवति, यदपि रक्तादेर्मांसादिपोषणं तदपि रसादेव रक्तादिधर्मतया रक्तादिव्यपदेशभाजो भवतीति व्युत्पादितमेव, यत्तु रसस्य सर्वधातुपोषकत्वमुक्तं तदपि रक्तादिपोषकतया तथा हृदयस्थस्थायिरसस्य कृत्स्नदेहव्यापकतया वोपपन्नम्; एवं चरकेऽप्युक्तम्;—"व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा। युगपत् सर्वतोऽजस्रं देहे विक्षिप्यते सदा—" (च. चि. स्था. अ. १७) इत्यादि। तदप्युक्तन्यायात् एवोपपन्नं; यदपि मांसादिना समानेन मांसादेरेव पोषणं तदपि धात्वाप्लावनन्यायेन गच्छतापि रसेन तद्धातुसमानेनांशेन तद्धातुपोषणादुपपन्नम्। वृष्यं तु प्रभावात् यथा खले कपोतन्यायेन विदूरमपि शुक्रं प्रभावात् शीघ्रं याति तथात्रापि शीघ्रमेव वृष्योत्पन्नो रसो रक्तादिधातून् शीघ्रमाप्लावयतीति सुघटम्। एवमनया दिशाप्यत्र दूषणमुद्धार्यम्। तेनायं पक्षस्तावत् साधुः। खले कपोतपक्षेऽपि यथा रसाद्रक्तमित्यादि गौणतया भवति तद्दर्शितमेव। यत्तु चरके "रक्तं विबद्धमार्गत्वान्मांसादीन् न प्रपद्यते"—इत्युक्तं तत् कृत्स्नदेहचारिशोणिताभिप्रायेण, न तु पोषकरक्ताभिप्रायेणेति व्यवस्थाप्यते। यत्तु "एकैकस्मिन् धातौ त्रीणि त्रीणि"—इत्यादिना धातौ अवस्थानकाल उक्तः स पूर्वपूर्वरक्तादिधातुलङ्घनकालो विदूरगामिरस-

स्येति व्यवस्थाप्यते । एवमनयोः पक्षयोर्महाजनपरिगृहीतयोर्गतिरुपदर्शिता; स्वरसस्तु अस्माकं केदारीकुल्यान्याये । यत्तु अन्यैः खलेकपोतन्यायस्वीकारेण चरके संततज्वरस्य द्वादशाश्रयत्वं युक्तमित्याद्युक्तं तन्न बुद्ध्यामहे, सन्ततज्वरस्य द्वादशाश्रयत्वं दोषमहिम्ना कृत्स्नदेहव्यापकतया "यथा धातुं तथा मूत्रं पुरीषं चानिलादयः"—(च. चि. स्था. अ. ३) इत्यादिनोक्तम् । दोषाणां च कुपितानां संप्राप्तिविशेषात् किमगम्यमस्ति देहे येन तावद्रसमेव परं सर्वधात्वादिव्यापकं सर्वधातुदूषणेऽपेक्षन्त इति ॥ २३ ॥

**रसात् स्तन्यं तथा रक्तमसृजः कण्डराः शिराः ॥**
**मांसाद्वसा त्वचः षट् च मेदसः स्नायुसन्धयः ॥ २४ ॥**

संप्रति प्रसादजन्यतां धातूनामभिधाय उपधातूनामप्याह—रसादित्यादि । अत्रापि रसात् स्तन्यं प्रसादजमित्यादि योज्यम् । रक्तमिति स्त्रीणां रजःसंज्ञं रक्तमप्युपधातुरूपम्, रसादेव रक्तं प्रसादभागजन्यमित्यर्थः। उक्तं च सुश्रुते,—"रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रपद्यते" । (सु. सू. स्था. अ १४) इति । एतच्च रजोरूपं रक्तं रसजन्यमपि धातुशोणितवत् न शीघ्रं जायते, किन्तु शुक्रवन्मासेनैव । तदुक्तं सुश्रुते,—"एवं मासेन रसः शुक्रीभवति स्त्रीणां च आर्तवम्—" इति । अन्ये तु—"घृतकुम्भो यथैवाग्निमाश्रितः प्रविलीयते । विसर्पत्यार्तवं पुंसां तथा स्त्रीणां समागमे—" इत्यत्र यथा आर्तवशब्देन शुक्रमुच्यते तथा स्त्रीणां च आर्तवमित्यत्रापि आर्तवशब्दः शुक्र एव वर्तते न तु रजसि; रजो हि रसाद्रक्तवत् शीघ्रमेव जायते न तु मासेन इत्याहुः । तन्न इत्यन्ये, विसर्पत्यार्तवमित्यादावपि स्त्रीणामार्तवं पुंसां समागमे सति विसर्पतीति योजनया आर्तवशब्दस्य रजोवचनत्वेनाप्युपपत्तेः । वस्तुतस्तु आर्तवस्य रक्तरूपता यद्यपि मासादर्वाग्भवति तथापि तस्यार्तवरूपता गर्भाशयप्राप्त्यैव भवति, गर्भाशयप्राप्तिस्तु मासेनैव भवतीति कृत्वा मासेनार्तवं भवतीति सुश्रुतेनोक्तम् । उक्तं हि विश्वामित्रेण,—"सूक्ष्माः केशप्रतीकाशा बीजरक्तवहाः शिराः । गर्भाशयं पूरयन्ति मासाद्बीजाय कल्पते—" इति । तत्र बीजभूतरक्तं बीजरक्तमार्तवमित्यर्थः । असृजः कण्डरा इति स्थूलस्नायवः । मेदसः स्नायुसन्धय इत्यनेन तु मेदसः सूक्ष्मस्नायुपोषणमिति ज्ञेयम् । चरके हि कण्डराशब्दः स्थूलस्नायुवाची, सुश्रुते च स्थूलशिरावाचीति ज्ञेयम् । एते च स्तन्यादयः शरीरधारका अपि उपधातुशब्देनैवोच्यन्ते, नतु धातुशब्देन; धातुशब्दप्रवृत्तेर्धारणपोषणनिमित्तत्वात् । तेन ये शरीरं धारयन्ति धातूंश्च पुष्णन्ति रसादयस्त एव मुख्यतया धातुशब्दवाच्या न स्तन्यादयः, ते हि शरीरं धारयन्त्येव न तु किंचित् पुष्णन्ति । उक्तं हि भोजे,—"शिरास्नायुरजस्तन्यत्वचो गतिविवर्जिताः। धातुभ्यश्चोपजायन्ते तस्मात्ते उपधातवः"—इति । अत्र गतिविवर्जिता इत्यनेन धात्वन्तरपोषणाद्या गतिर्निषेध्यते । अत एव धातुभ्यश्चोपजायन्त एव नतु परं जनयन्तीत्यर्थः । यत्तु 'किंचिद्दोषप्रशमनं किंचिद्धातुप्रदूषणम्—" इत्यत्र धातुशब्देन दोषाणामपि ग्रहणम्, तद्गौणधातुशब्दप्रयोगाज्-

ज्ञेयम्। उक्तं हि,—"दोषा ह्यपि धातुसंज्ञां लभन्ते"—इति। शुक्रस्याप्योजःपोषकतया धारणपोषणयोगोऽस्तीति धातुत्वमखण्डितमेव। ओजस्तु यद्यपि न धातुषु नाप्युपधातुषु पठितं तथापि तत् सप्तधातुसाररूपतया सप्तधात्वन्तर्गतमेवेति ज्ञेयम्। अतएव तस्याग्निरपि पृथङ्नोक्तः॥ २४॥

**किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः॥**
**पित्तं मांसस्य खमला मलः स्वेदस्तु मेदसः॥ २५॥**
**स्यात्किट्टं केशलोमास्थ्नो मज्ज्ञः स्नेहोऽक्षिविट् त्वचाम्॥**

प्रसादभागोत्पादनमभिधाय मलभागोत्पादनमाह—किट्टमित्यादि। रसस्य तु कफ इति रसात् स्वाग्निपच्यमानात् यः किट्टभाग इति मलभागः स कफः, प्रसादजश्च रक्तं; न तु रसोत्पत्तिमात्र एव कफो जायत इति। एवं रक्तादिमलेऽपि ज्ञेयम्। मांसस्य खमला इति कर्णनासास्यप्रजननादिस्रोतोमलाः। स्यात् किट्टं केशलोमास्थ्न इति अत्र नखस्याप्यस्थिमलत्वं सुश्रुतप्रामाण्यादुन्नेयम्, तत्र हि नखा अप्यस्थिमलत्वेनोक्ताः। अतएव बहुधाशीतपीतीये चरकेऽप्युक्तम्,—"किट्टात् केशनखादयः पुष्णन्ति"—इति। यत्तु शारीरे अस्थिगणनायां विंशतिर्नखा गणिताः तदस्थिसाम्येनोक्तम्; किंवा जीवन्नखस्यास्थित्वं मृतनखस्य तु मलत्वं ज्ञेयम्। अत्र केचिदाकृष्टाण्डकोषस्य पुंसः श्मश्रुणोऽभावात् श्मश्रूणि शुक्रमलतया वदन्ति। तन्न, तन्त्रेऽनभिधानात्, श्मश्रुहीनस्यापि शुक्रदर्शनाच्च। मज्ज्ञः स्नेहोऽक्षिविट् त्वचामिति स्नेहस्त्वचामित्यन्वयः; अक्षिविडिति दूषिका। अत्र मलस्थूलाणुभागविशेषेण त्रिविधं परिणामं वर्णयन्ति केचित्। यथा—रसादग्निपकात् मलं कफः, स्थूलभागो रसः, सूक्ष्मभागश्च रक्तम्; तथा रक्तादग्निपच्यमानात् मलं पित्तं, स्थूलभागः शोणितं, सूक्ष्मभागस्तु मांसमित्यादि॥ २५॥—

**प्रसादकिट्टे धातूनां पाकादेवं द्विधर्च्छतः॥ २६॥**

उपसंहरति—प्रसादेत्यादि। धातूनां पाकादेवमुक्तक्रमेण प्रसादकिट्टे द्विधा ऋच्छतो भवत इत्यर्थः॥ २६॥

**परस्परोपसंस्तम्भा धातुस्नेहपरम्परा॥**

इदानीं यथा पोषकेण रसादिना पोष्यस्य रक्तादेराप्यायनं क्रियते तथा पोष्येणापि रक्तादिना पोषकस्यापि रसादेराप्यायनं क्रियत इति परस्परं धातूनामुपकारकत्वमाह—परस्परेत्यादि। परस्परमुपस्तम्भः सन्तर्पकत्वं यस्याः सा तथा। धातुस्नेहपरम्परा धातुरूपसारपरम्परा। अतएवातिव्यवायेन पोष्यस्य शुक्रस्य क्षयादपि पूर्वपूर्वपोषकधातुक्षयो य उक्तस्तत्रान्तरे स उपपद्यत इति ज्ञेयम्॥—

**इति भौतिकधात्वन्नपक्तॄणां कर्म भाषितम्॥**

एवमुक्तमग्नीनां कर्मोपसंहरति—इतीत्यादि। इति भौतिकधात्वन्नरूपपक्तॄणां कर्म भाषितम्॥—

**अन्नस्य पक्ता सर्वेषां पक्तृणामधिको मतः ॥ २७ ॥**
**तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥**
**तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ॥ २८ ॥**
**पालयेत् प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥**

भौतिकाः पञ्च, धात्वग्नयः सप्त, अन्नस्य पक्ता एक, इति त्रयोदशाग्नयः । एषु एव
जाठराग्नेः प्राधान्यमाह—अन्नस्येत्यादि । हि यस्मात्ते द्वादशाग्नयस्तस्य जाठराग्नेर्वृद्ध्या
वृद्ध्यात्मका वृद्धिरूपाः, तथा क्षयेण च क्षयात्मका हि यस्मात्ते द्वादशाग्नयः क्षीणस्व-
रूपा भवन्ति तस्माज्जाठरानलान्वयव्यतिरेकाऽनुविधायित्वात्तन्मूला इत्यर्थः । तस्मात्तं
पालयेदिति योज्यम्। विधिवद्युक्तैरिति यथाविध्युपयुक्तैः । विधिश्च दर्शित एव ॥२८॥—

**यो हि भुङ्क्ते विधिं मुक्त्वा ग्रहणीदोषजान् गदान्२९**
**स लौल्याल्लभते शीघ्रं तस्मान्नोल्लङ्घयेद्विधिम् ॥**

उक्तविधिविपर्यये दोषमाह—यो हीत्यादि ॥ २९ ॥—

**प्राणाः प्राणभृतामन्नमन्नं लोकोऽभिधावति ॥ ३० ॥**
**वर्णप्रसादसौस्वर्यं जीवितं प्रतिभा सुखम् ॥**
**तुष्टिः पुष्टिर्बलं मेधा सर्वमन्ने प्रतिष्ठितम् ॥ ३१ ॥**
**लौकिकं कर्म यद्वृत्तौ स्वर्गतौ यच्च वैदिकम् ॥**
**कर्मापवर्गे यच्चोक्तं तच्चाप्यन्ने प्रतिष्ठितम् ॥ ३२ ॥**

इदानीं यथाविध्युपयुक्तस्यान्नस्य गुणमाह—प्राणा इत्यादि । अभिधावति प्रार्थयते ।
किं वा अन्नमित्यनन्तरमुद्दिश्येति शेषः । प्रतिभा प्रज्ञा । लौकिकमिति अपरीक्षकलोक-
भवम्, अपरीक्षका एव हि वर्त्तमानमात्रे प्रवर्तन्ते, परीक्षकास्तु जन्मान्तरोपकारिण्येव
प्रवर्तन्ते प्रायः । कर्म यद्वृत्ताविति वर्तमाने साध्ये यत् कर्म कृष्यादि । स्वर्गताविति
स्वर्गमने । वैदिकमिति यज्ञादि । अपवर्ग इति मोक्षे । एताश्च निमित्तसप्तम्यः । यच्चो-
क्तमिति मोक्षशास्त्रे सत्यब्रह्मचर्यादि । अन्ने प्रतिष्ठितमिति अन्ननिबन्धनदेहस्थित्यभावेन
सर्वारम्भाभावात् । तस्माद्यथोक्तविधिना अन्नं सेव्यमित्यर्थः ॥ ३०—३२ ॥

**इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे आहारविधि-
र्नाम त्रयोदशो वर्गः समाप्तः ।**

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां
आहारविधिर्नाम त्रयोदशो वर्गः समाप्तः ।

---

शीतोष्णतोयासवमद्ययूषफलाम्लधान्याम्लपयोरसानाम् ॥
यस्यानुपानं तु हितं भवेद्यत्तस्मै प्रदेयं त्विह मात्रया तत् ॥
व्याधिं च कालं च विभाव्य धीरै-
र्द्रवाणि भोज्यानि च तानि तानि ॥ १ ॥

आहारानन्तरं हि सुखपाकार्थमनुपानं प्रयुज्यत इत्यनन्तरमनुपानमाह; तत्र सर्वाण्येवानुपानद्रव्याणि उत्तरत्र विवरीतुं संक्षेपेण सूत्रयन्नाह—शीतेत्यादि । फलाम्लं बीजपूरादि । धान्याम्लं काञ्जिकादि । पयःशब्दस्तद्विकारयोर्वक्ष्यमाणयोर्मस्तुतक्रयोरपि ग्राहकः । इक्षुरसस्तु रसशब्देन गृह्यते । शीतोष्णतोयादिषु मध्ये यदनुपानं यस्मै हितं भवेत्तस्मै तदेव देयम् । कथमित्याह—व्याधिमित्यादि ।—व्याधिं ज्वरादिकं; तथा व्याधिशब्देन व्याधिहेतवो वातादयोऽपि गृह्यन्ते उपचारात्; एतन्न सङ्गतमित्यन्ये, युगपद्वृत्तिद्वयापत्तिप्रसङ्गात् । कालमार्तवमावस्थिकं च । द्रवाणि द्रवप्रधानानि स्नेहादीनि । भोज्यानि शूकधान्यादीनि । विभाव्येति विशेषेण ज्ञात्वा; न सामान्यरूपेण अवधार्येत्यर्थः ॥ १ ॥

स्निग्धोष्णं मारुते शस्तं पित्ते मधुरशीतलम् ॥
कफेऽनुपानं रूक्षोष्णं क्षये मांसरसं पयः ॥ २ ॥

सामान्येनानुपानमभिधाय विशेषेणानुपानेऽभिधातव्ये प्रथमं दोषविशेषेऽनुपानविशेषमाह—स्निग्धोष्णमित्यादि ॥ २ ॥

उष्णोदकानुपानं तु स्नेहानामथ शस्यते ॥
ऋते भल्लातकस्नेहात्तत्र तोयं सुशीतलम् ॥ ३ ॥

दोषभेदेनानुपानभेदमभिधाय द्रव्यभेदेनानुपानभेदे वक्तव्ये शीतोष्णतोययोः प्रथमं सूत्रितत्वात् प्रथमं तयोर्विषयमाह—उष्णोदकेत्यादि । ऋते भल्लातकस्नेहादिति उष्णोदकानुपानस्यापवादः । तत्र तोयं सुशीतलमित्यस्य स्थाने स्नेहात्तौवरकात्तथेति केचित् पठन्ति । तत्र,—"पत्रैस्तु केशराकारैः फलैः सर्षपसन्निभैः । वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः—" इति (सु चि स्था. अ. ) । तेन तुवरकफलोद्भवः स्नेहस्तौवरक इत्यर्थः । तेन भल्लातकस्नेहे तौवरकस्नेहे चोष्णजलस्य निषेधाच्छीतजलानुपानमर्थलब्धमेव ॥ ३ ॥

अनुपानं वदन्त्येके तैले यूषाम्लकाञ्जिकम् ॥

स्नेहप्रसङ्गेनैकीयं मतं तैलानुपाने दर्शयन्नाह—अनुपानमित्यादि । अत यूषाम्लकाञ्जिकमिति उष्णकाले यूषः, शीतकाले काञ्जिकमित्याहुः ॥—

शीतोदकं माक्षिकस्य पिष्टान्नस्य च सर्वशः ॥ ४ ॥

दधिपायसमद्यार्ते विषदुष्टे तथैव च ॥

शीतोदकानुपानविषयमाह—शीतोदकमित्यादि । पिष्टान्ने विदाहरक्षार्थं पायसेऽपि गुरुत्वाद्विदाहरक्षार्थं शीतजलानुपानम् ॥ ४ ॥—

केचित् पिष्टमयस्याहुरनुपानं सुखोदकम् ॥ ५ ॥

पिष्टमयानुपाने एकीयमतमाह—केचिदित्यादि । सुखोदकमिति कदुष्णमुदकम् ॥ ५ ॥

पयो मांसरसो वापि शालिमुद्गादिभोजिनाम् ॥
युद्धाध्वातपसंतापविषमद्यरुजासु च ॥ ६ ॥

दुग्धमांसरसयोर्विषयमाह—पय इत्यादि । अत्र 'यदाहारगुणैः पानं विपरीतं तदिष्यते' इति वचनात् शालिषु पयसः समानगुणस्यानुपानत्वं न मन्यमानाः केचित् पयःस्थाने मस्तु पठन्ति । तत्तु न मनोरमं, यतः शालिषु पयोऽनुपानं शालिप्रभावादेव वचनादुन्नीयते; नहि सर्वत्रानुपाने कारणवर्णनं सुगमम् ॥ ६ ॥

मांसादेरनुपानं तु धान्याम्लं दधि मस्तु वा ॥
अल्पाग्नीनामनिद्राणां तन्द्राशोकभयक्लमैः ॥ ७ ॥
मद्यमांसोचितानां तु मद्यमेवानुशस्यते ॥
अमद्यपानामुदकं फलाम्लं वा प्रयोजयेत् ॥ ८ ॥
उपवासाध्वभाष्यस्त्रीमारुतातपकर्मभिः ॥
क्लान्तानामनुपानार्थं पयः पथ्यं यथाऽमृतम् ॥ ९ ॥

मांसादेरनुपानमाह—मांसादेरित्यादि । धान्याम्लं तु काञ्जिकम् । दधिमस्तु यद्यपि 'शीतोष्णतोयासवमद्य' इत्यादिवचने पूर्वं न सूत्रितं तथापि तत्र पयोग्रहणस्य गोरसोपलक्षणत्वात् लभ्यते इति प्रागेवोक्तम् । फलाम्लं दाडिमादि ॥ ७—९ ॥

सुरा कृशानां स्थूलानामनुशस्तं मधूदकम् ॥

देहभेदेनानुपानभेदमाह—सुरेत्यादि । कृशानां सुरा अनुशस्ता, स्थूलानां तु मधूदकमनुशस्तमिति संबन्धः । मधुमिश्रितमुदकं मधूदकम् ॥—

निरामयानां चित्रं तु भक्तमध्ये प्रकीर्तितम् ॥ १० ॥

सुस्थमधिकृत्यानुपानमाह—निरामयाणामित्यादि । चित्रमिति नानाप्रकारं, येन नानाप्रकारा दोषधातुमलाः स्वमानमनुवर्तन्ते । सामयानां तु अनुपानं वातादिदोषापेक्षयैव देयम् । तच्च 'स्निग्धोष्णं मारुते शस्तं' इत्यादिना प्रागेवोक्तम् ॥ १० ॥

क्षीरमिक्षुरसश्चेति हितं शोणितपित्तिनः ॥

रक्तपित्तिनामनुपानमाह—क्षीरमित्यादि । शीतोष्णतोयेत्यादिसूत्रे इक्षुरसस्यापि रसशब्देनाभिधानात् इक्षुरसोऽपि अनुपाने सूत्रित इति तदभिधानम् नोत्सूत्रम् ॥—

**अर्कशेलुशिरीषाणामासवस्तु विषार्तिषु ॥ ११ ॥**

विषार्तिषु देयमनुपानमाह—अर्केत्यादि ॥ ११ ॥

**यदाहारगुणैः पानं विपरीतं तदिष्यते ॥**
**तत्रानुपानं धातूनां दृष्टं यन्न विरोधि च ॥ १२ ॥**

अनुक्तानुपानज्ञानार्थमाह—यदाहारेत्यादि । आहारगुणैरिति शीतस्नेहमधुरादिभिः । विपरीतमिति विपरीतगुणमनुपेयम् । एवं च दध्नोऽम्लस्य मधुरं क्षीरं तथा पायसस्य च काञ्जिकाद्यनुपानं स्यादित्यत आह—धातूनां यन्न विरोधि चेति। एवं दध्यादिषु अम्लेषु क्षीराद्यनुपीयमानं धातुविरोधमावहतीति न तदनुपानमित्यर्थः । एवमन्यदपि विरुद्धमुन्नेयम् ॥ १२ ॥

**दोषवद्गुरु वा भुक्तमतिमात्रमथापि वा ॥**
**यथोक्तेनानुपानेन सुखमन्नं प्रजीर्यति ॥ १३ ॥**

अनुपानगुणमाह—दोषवदित्यादि । दोषवदिति वातादिदोषकरम् । गुर्विति स्वभावगुरु लड्डुकपिष्टकादि, मात्रागुरोस्तु अतिमात्रपदेन निर्दिष्टत्वात् ॥ १३ ॥

**रोचनं बृंहणं वृष्यं दोषघ्नं वातभेदनम् ॥**
**तर्पणं मार्दवकरं श्रमक्लमहरं सुखम् ॥ १४ ॥**
**दीपनं दोषशमनं पिपासाच्छेदनं परम् ॥**
**बल्यं बलकरं सम्यगनुपानं सदोच्यते ॥ १५ ॥**

पुनः प्रशस्तं गुणमाह—रोचनमित्यादि ॥ १४ ॥ १५ ॥

**तदादौ कर्षयेत्पीतं स्थापयेन्मध्यसेवितम् ॥**
**पश्चात्पीतं बृंहयति तस्माद्वीक्ष्य प्रयोजयेत् ॥ १६ ॥**

अनुपानस्य भोजनादिमध्यान्तविभागेन गुणविशेषमाह—तदादावित्यादि । आदौ पीतं वायुना अधोगतेन रूक्षीकृतमाहाराकांक्षाविरोधकतया च देहं कर्षयति । एतच्च यद्यपि कस्यचित् पश्चान्न भवतीत्यतोऽनुपानार्थो न घटते अनुशब्दस्य पश्चादर्थत्वात् तथापि पानस्य सार्वकालिकत्वात् उपन्यस्तम्; किंवा अनुशब्दो लक्षणार्थः, तेन भाविभोजनं तृष्णां चानुलक्षीकृत्य पीयत इत्यनुपानमित्यर्थः । स्थापयेन्मध्यसेवितमिति भोजनमध्ये सेवितमनुपानं पित्तस्य स्नेहेन युक्तं सत् शरीरं समं स्थापयति । पश्चात् पीतं च श्लेष्मप्रसङ्गात् स्निग्धतरं सद्बृंहयति । वीक्ष्य प्रयोजयेदिति कर्षणादिकार्यमपेक्ष्य प्रयोजयेदित्यर्थः ॥ १६ ॥

स्थिरतां गतमक्लिन्नमन्नमद्रवपायिनाम् ॥
भवत्याबाधजननमनुपानमतः पिबेत् ॥ १७ ॥

अनुपानाभावे दोषमाह—स्थिरतामित्यादि ॥ १७ ॥

न पिबेत् श्वासकासार्तो रोगे चाप्यूर्ध्वजत्रुगे ॥
क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः ॥ १८ ॥

विषयविशेषेऽनुपाननिषेधमाह—न पिबेदित्यादि । अत्र केचिद्द्रवं विना जरणाभावात् नञश्च ईषदर्थत्वात् अल्पं पिबेदित्यर्थं वदन्ति ॥ १८ ॥

पीत्वाध्वभाष्याध्ययनस्वप्नगेयान्न शीलयेत् ॥
प्रदूष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितम् ॥
स्यन्दाग्निसादच्छर्द्यादीन् जनयेदामयान् बहून् ॥ १९ ॥

द्रवं पीत्वा यन्न कार्यं करणे वा यो दोषस्तमाह—पीत्वेत्यादि । कण्ठोरसि स्थितमिति अध्वादिक्षोभितवातेनोर्ध्वं नीतत्वात् । स्यन्दः कफप्रसेकः ॥ १९ ॥

अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ॥
पलद्वयं त्वनिलजे पित्तजे तु पलत्रयम् ॥ २० ॥

अनुपानमात्रामाह—अनुपानमित्यादि ॥ २० ॥

इति श्रीचक्रपाणिदत्तविरचिते द्रव्यगुणसंग्रहे अनुपानवर्गो नाम चतुर्दशो वर्गः समाप्तः ॥

इति श्रीशिवदाससेनविरचितायां द्रव्यगुणसंग्रहटीकायां अनुपानवर्गो नाम चतुर्दशो वर्गः समाप्तः ॥

---

अत ऊर्ध्वं प्रवक्ष्यामि गुणानां कर्मविस्तरम् ॥
कर्मभिस्त्वनुमीयन्ते नानाद्रव्याश्रया गुणाः ॥ १ ॥

अनुपनादौ प्रतिपादिता ये गुणास्ते हेयोपादेयकार्यकर्तृतयैव हेया उपादेया वा, तेषां च कार्यं कथं ज्ञातव्यमिति जिज्ञासायां गुणानां कर्माभिधातुं प्रकरणान्तरमारभते—अत ऊर्ध्वमित्यादि । कर्मेति कार्यं कार्यावच्छिन्ना वा क्रिया । यद्यप्यत्रापि शीतपिच्छिलादयः प्रत्यक्षास्तथापि ते तत्कार्यकर्तृतया अनुमेया एवेति कर्मभिस्त्वनुमीयन्त इत्युक्तम् । नाना च ते द्रव्याश्रयाश्चेति नानाद्रव्याश्रयाः ॥ १ ॥

ह्लादनः स्तम्भनः शीतो मूर्च्छातृट्क्लेददाहजित् ॥
उष्णस्तद्विपरीतः स्यात्पाचनश्च विशेषतः ॥ २ ॥

शीतगुणकर्माह—ह्लादन इत्यादि। ह्लादनः सुखकारक इत्यर्थः। स्तम्भनो रक्तातिप्रवृत्त्यादीनाम्। शीत इति शीतगुणः। पाचनो व्रणस्य आमस्य ॥ २ ॥

**स्नेहमार्दवकृत् स्निग्धो बलवर्णकरस्तथा ॥**
**रूक्षस्तद्विपरीतः स्याल्लेखनः स्तम्भनः खरः ॥ ३ ॥**

रूक्षगुणकर्माह—रूक्ष इत्यादि। खर इति खरत्वं कार्कश्यं तत्कर इति ॥ ३ ॥

**पिच्छिलः पीडनो बल्यः सन्धानः श्लेष्मलो गुरुः ॥**

पिच्छिलगुणकर्माह—पिच्छिल इत्यादि। पीड़न इति व्रणपीड़नः ॥—

**विशदो विपरीतः स्यात् क्लेदाचूषणरोपणः ॥ ४ ॥**

विशदगुणकर्माह—विशद इत्यादि। क्लेदाचूषण इति क्लेदहारकः ॥ ४ ॥

**दाहपाककरस्तीक्ष्णः स्रावणो मृदुरन्यथा ॥**

तीक्ष्णमृदुगुणयोः कर्माह—दाहेत्यादि। स्रावण इति व्रणनयनस्रावणः। मृदुरन्यथेति तीक्ष्णविपरीतकर्मेत्यर्थः ॥—

**सादोपलेपबलकृद् गुरुस्तर्पणबृंहणः ॥ ५ ॥**
**लघुस्तद्विपरीतः स्याल्लेखनो रोपणस्तथा ॥**

गुरुगुणकर्माह—सादेत्यादि। सादोऽग्निसादः ॥ ५ ॥—

**दशाद्याः कर्मतः प्रोक्तास्तेषां कर्मविशेषणैः ॥ ६ ॥**
**दशैवान्यान् प्रवक्ष्यामि द्रवादींस्तन्निबोध मे ॥**

कर्म इति ल्यब्लोपे पञ्चमी। तेन कर्म पुरस्कृत्य प्रोक्ता इत्यर्थः। तेषां गुणानां मध्ये विशिष्टैः कर्मभिरन्यान् दश प्रवक्ष्यामीत्यर्थः ॥ ६ ॥—

**द्रवः प्रक्लेदनः सान्द्रः स्थूलः स्याद् द्वन्द्वकारकः ॥ ७ ॥**
**श्लक्ष्णः पिच्छिलवज्ज्ञेयः कफलो विशदो यथा ॥**

द्रवादिगुणानां कर्माह—द्रव इत्यादि। सान्द्र इति सान्द्रगुणः। द्वन्द्वो मेलक उपचय इति यावत् तत्कारकः। केचित्तु 'द्रवः प्रक्लेदनो व्यापी शुष्कः स्याद्द्वन्द्वकारकः' इति पठन्ति। तत्र शुष्क इति शुष्कगुण इत्यर्थः ॥ ७ ॥—

**सुखानुबन्धी सूक्ष्मश्च सुगन्धो रोचनो मृदुः ॥ ८ ॥**
**दुर्गन्धो विपरीतोऽस्मात् हृल्लासारुचिकारकः ॥**

सुगन्धगुणमाह—सुखानुबन्धीत्यादि। सुखानुबन्धी सुखजनकः। सूक्ष्म इत्यवगाहकः। शोभनो गन्धः सुगन्धः। दुर्गन्धगुणकर्माह—दुर्गन्ध इत्यादि। विपरीत इति दुःखानुबन्धी। तथा नैव पुरुषमवगाहते अनभिलषितत्वात्। सुगन्धवैपरीत्येनैवारुचौ

लब्धायां पुनस्तद्वचनं द्विविधारुचिप्रापणार्थम् । द्विविधो हि अरोचकः—तत्रैकः अनन्नाभिलाषरूपः, द्वितीयस्तु सत्यपि अभिलाषे अभ्यवहारासामर्थ्यरूपः ॥ ८ ॥—

**सरोऽनुलोमनः प्रोक्तो मन्दो यात्राकरः स्मृतः ॥ ९ ॥**

सरगुणमाह—सर इत्यादि । अनुलोमन इति विगुणवायुमलादेः प्रवर्तनः । यात्राकर इति स्थैर्याद्देहस्थिरकारकः ॥ ९ ॥

**व्यवायी चाखिलं देहं व्याप्य पाकाय कल्प्यते ॥**

व्यावायीगुणमाह—व्यवायीत्यादि । व्यवायी गुणः अपक्व एव मद्यविषवत् प्रथममखिलं देहं व्याप्नोति ततस्तत्रस्थ एव पाकं याति । येऽपि भावाय इति पठन्ति, तत्रापि भावाय शरीरस्थितये भवतीत्यर्थः । अन्ये तु भावाय कल्प्यत इत्यस्य स्थितये कल्प्यते नोर्ध्वमधो वा यातीत्याहुः । अपरे तु भावशब्दमभिप्रायार्थमिच्छन्ति । तत्र नियतद्रव्यप्रभावेणात्मशक्त्यनुरूपं तत्तद्द्रव्यं मद्यविषवत् विशिष्टाभिप्रायाय कल्प्यत इत्यर्थमाचक्षते ॥—

**विकासी विकसन्नेवं धातुबन्धान् विमोक्षयेत् ॥ १० ॥**

विकासीगुणमाह—विकासीत्यादि । विकसनं विकासो हिंसासहिता गतिः 'कस'गतिसातनयोरित्यस्य रूपं, सोऽस्यास्तीति विकासी । विकसन्निति गच्छन् । धातुबन्धानिति धात्वन्तरमर्यादारूपावकाशान् रसादीन् धातुबन्धान् । विमोक्षयेदिति धात्ववस्थितान् दोषमलान् पृथक्करोतीति ॥ १० ॥

**आशुकारी तथाशुत्वाद्धावत्यम्भसि तैलवत् ॥**
**सूक्ष्मस्तु सौक्ष्म्यात्सूक्ष्मेषु श्रोतःस्वनुसरः स्मृतः ॥ ११ ॥**

आशुकारीगुणमाह—आशुकारीत्यादि । आशुकारी गुणः । आशुत्वादिति शीघ्रगतित्वात् ॥ ११ ॥

**गुणा विंशतिरित्येवं यथावत्परिकीर्तिताः ॥**

उपसंहरन्नाह—गुणा इत्यादि । सरविशेषो व्यवायी, तीक्ष्णविशेषो विकासी, तेन विंशतिर्गुणा इत्युपसंहारो युक्त एव । अन्ये तु संख्याधिक्यभिया व्यवायिविकासिगुणौ न पठन्ति । तन्न, व्यवायिविकासिनोः स्वतन्त्रे परतन्त्रे च पाठात् । अन्ये तु दशैवान्यान् प्रवक्ष्यामीत्यत्र दश चान्यानिति पठित्वा चकारस्यानुक्तसमुच्चयार्थत्वेनाधिकगुणद्वयपाठं समर्थयन्ति । इति गुणकर्मनिर्देशः ॥—

**दन्तकाष्ठं करञ्जादि रुचिदं दन्तशोधनम् ॥ १२ ॥**
**जिह्वानिर्लेखनं वक्त्रजिह्वावैरस्यजाड्यजित् ॥**
**देवगोविप्रवृद्धानां गुरूणामपि पूजनम् ॥ १३ ॥**

आयुष्यं वृद्धिदं पुण्यमलक्ष्मीकविनाशनम् ॥
मङ्गल्योपासनं शस्तं वृद्धिदं व्यसनापहम् ॥ १४ ॥
पादप्रक्षालनं पादमलरोगश्रमापहम् ॥
दृष्टिप्रसादनं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् ॥ १५ ॥
नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥
लाघवं कर्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता ॥ १६ ॥
दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी तु तं त्यजेत् ॥ १७ ॥
मेदोहरः स्थैर्यकरो गौरवव्याधिनाशनः ॥
अभ्यङ्गो मार्दवकरो वातश्लेष्मविनाशनः ॥ १८ ॥
उद्वर्तनं स्थिरकरं कफमेदोविनाशनम् ॥
स्नानं दीपनमायुष्यं वृष्यं स्वर्यं बलप्रदम् ॥ १९ ॥
कण्डूमलकफस्वेदतन्द्रातृड्दाहपाप्मजित् ॥
उष्णाम्बुनाधःकायस्य परिषेको बलावहः ॥ २० ॥
तेनैव तूत्तमाङ्गस्य बलहृत्केशचक्षुषोः ॥
आलेपनं वृष्यतरं बल्यं दुर्गन्धपाप्मजित् ॥ २१ ॥
वासो नवं निर्मलं च श्रीमत्पारिषदं शुभम् ॥
हर्षणं काम्यमौजस्यं रत्नाभरणधारणम् ॥ २२ ॥
रजोवश्यायसूर्यांशुहिमानिलनिवारणम् ॥
प्रतिश्यायशिरःशूलहरं चोष्णीषधारणम् ॥ २३ ॥
ईतेर्विधमनं बल्यं गुप्त्यावरणशङ्करम् ॥
घर्मानिलरजोम्बुघ्नं छत्रधारणमुच्यते ॥ २४ ॥
स्खलतः संप्रतिष्ठानं शत्रूणां च निवारणम् ॥
अवष्टम्भनमायुष्यं भयघ्नं दण्डधारणम् ॥ २५ ॥
पादाभ्यङ्गस्तु चक्षुष्यो निद्राकृत्पादरोगहा ॥
संवाहनं मांसरक्तत्वक्प्रसादकरं परम् ॥ २६ ॥